१०२०

989

ॐ

# ब्रह्मतर्कस्तवं सव्याख्यानम्

श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्री
मच्छ्रीकण्ठविद्येश्वरांशावतार-
रूप श्रीदेवीदेवकृतदीक्षित
नामकरणोत्सव

परिमलशिवार्कमणिदीपिका शिवतत्त्वविवेक-
कर्णामृत कुवलयानन्दादि चतुरधिक
शतप्रबन्धधौरन्धर्यं

श्रीकण्ठमतप्रतिष्ठापक श्रीमद-
प्पय्यसूरितातपादकृत-
निबन्धनेषु ।

शिवोत्कर्षरसकंदलितेषु ब्रह्मतर्कस्तवाख्यमिदंनिबन्धनम्
स्वकृतव्याख्यायुतम्बुधजनमनोहरम्
श्री चिदम्बरानन्दतीर्थशिष्य-श्रीकालहस्तिशरण
विमुक्ताभयविमुक्तभवशिवानन्दमुनिसंशोधितं
श्री काश्यां भारत-भूषणाभिधयन्त्रशालायां
मुद्रितं सद्विजयतेतराम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# शुद्धिपत्र ।

| पृष्ठ: | पंक्ति: | अशुद्धम् | शुद्धम् | पृष्ठ: | पंक्ति: | अशुद्धम् | शुद्ध |
|---|---|---|---|---|---|---|---|
| ४३ | ३ | अभी | अपि | ४५ | १५ | य इति | यि |
| ४५ | २३ | विष्णिन्द्रा | विष्णुद्रा: | ४६ | ९ | रूप | रा |
| ४६ | ९ | ब्रह्म | ब्रह्म | „ | २२ | रूपं | रूपा |
| ४७ | १८ | ब्रह्म | ब्रह्म | ४८ | १६ | स्मु | स्मुतेि |
| ४८ | १९ | वायन | वामन | „ | २२ | ब्रह्म | ब्र |
| ४९ | २ | पञ्च | पंच | ४९ | ४ | न्त्वं | चान्त |
| | | | | ५० | १३ | ध्र | ध्र |
| ५३ | २४ | नार्यं | नार्यं | ५४ | १३ | ब्रह्माद | ब्रह्माद्य |
| ५४ | १६ | स्म | स्म | „ | २२ | मर्भं | मूर्भ |
| ५५ | १२ | पूरुष | पुरुष | „ | २५ | चिन्मू अनेन | अने |
| | | | | | | | न चि |
| ५८ | ६ | सहा | महा | „ | ८ | पूर्णा | पू |
| „ | २१ | स्मना | सना | ५८ | २२ | स्मन्म | स्व |
| ५९ | ६। | मत्तयु | मत्य | ५९ | १७ | सिद्धम् | सिद्धु |



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर-विद्यामन्दिर.
देवप्रयाग (गढ़वाल-हिमालय)
व्यवस्थापक- पं. चक्रधरजोशी

॥ ॐ ॥

श्रीशिवमस्तु ॥

# ब्रह्मतर्कस्तवम् ।

अथ ब्रह्मतर्कस्तवस्य नातिविस्तरणं विवरणं क्रियते । तत्र स्तोत्रप्रतिपाद्यसकलार्थं प्रतिज्ञापरोऽयमाद्यः श्लोकः ।

उच्चावचैरुपनिषद्वचनप्रकाण्डै
रुन्मीलितश्रुतिगणैरुपबृंहणैश्च ।
यत्सादरं समुदितं यमिनामुपास्यम्
तद्ब्रह्म शंकर भवानितितर्कयामः ॥१॥

शस्तवाची प्रकाण्डशब्दः । प्रशस्तान्युपनिषद्वचनानि कारण-
क्यानि तानीह ब्रह्मासाधारणलक्षणभूतकारणत्वमुखेन ब्रह्म-
पयन्ति । ब्रह्मविषयत्वे विवादानास्पदतया ब्रह्मपरेषु वाक्येषु
ष्टानि तानि चोच्चावचानि अनेकभेदानि कानिचित् स्वस्मि-
कलप्रपञ्चस्रष्टृत्वप्रतिपादकानि "सदेवसोम्येदमग्र आसीत्"
दीनि, कानिचित्तत्पालकत्वप्रतिपादकानि "एष भूतपति-
भूतपाल" इत्यादीनि, कानिचित्स्वस्मिन् तत्प्रविलापकत्व-
तिपादकानि "यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योप-
चनक इत्था वेद यत्र स" इत्यादीन्योदनत्वनिरूपणेनैव स्वस्मि-
विलय इत्यपिहि सूचितम् । कानिचित्प्रतिप्राणि व्यवस्थिता-
कोर्ण सुखदुःखभोजयितृत्वप्रतिपादकानि "एषह्येवसाधक-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# शुद्धिपत्र ।

| ष्टः | पंक्तिः | अशुद्धम् | शुद्धम् | पृष्टः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| | १८ | चनक | चनङ्क | १ | २० | साध | साधु |
| २ | २४ | कोद्दा | कोष्ठा | २ | १४ | संप्रप्र | संप्र |
| | २ | सर्वै | ससर्वै | ६ | ३ | वैमु | वैमुं |
| | १३ | ग्रैव | ग्रैवं | ७ | २३ | व्रज | व्रजनेन |
| ० | २३ | स्वष्वा | ष्वा | ११ | ११ | अथि | अति |
| ३ | ६ | ह्वे | वे | १३ | १२ | हवा | हाव |
| ४ | ११ | तेदवीह | तदेवहि | १५ | १९ | ह | ह्ह |
| ७ | ३ | शिवच | शिववच | १७ | ७ | तत्ता | ता |
| | १३ | र्वा | वा | १८ | ७ | व्यं | व्ययम् |
| ८ | ११ | दिम्ये | दिभ्य | १९ | ६ | रेमव | रमेव |
| ९ | १० | ह्नी | वह्नी | „ | १२ | प्रा | प्र |
| | १६ | य | यत | २० | १५ | भ्याधि | भ्यामि |
| ० | १६ | अवगी । तायासु | अंवगी तामयासु | २० | १९ | मां | माम्मां |
| ० | १९ | प्यनन्य | पि।अनन्य | २२ | १० | स्यरतिः | प्ये रतिः |
| ३ | २० | स्तष | स्तच | २४ | १ | हुद | हुद्द |
| ४ | ६ | खिलाद्यवि | टिलाद्यवि | „ | १७ | लनाम् | लामाम् |
| ५ | १ | वद्य | यद्यवद्य | २६ | २० | म | त्य |
| ८ | १७ | र्यो | र्यो | ३० | २२ | ग्रेती | ग्रैषे |
| ० | २४ | पवर्षिं | पर्वंषि | ३१ | २४ | यौंधि | यौधि |
| २ | ६ | वि | वी | ३२ | २२ | स्मल्व | स्मल्व |
| | २३ | स्सव | स्त्व | ३३ | ६ | वात्सात्विकत्व- | वत्सात्विकत्वम् |
| ३ | ११ | य्याग्र | त्याग्र | ३४ | २२ | द्व | न |
| ५ | १५ | गु | यु | ३६ | ११ | ष्ट | ष्ट्व |
| ६ | ११ | गद्दति | गेति | „ | १७ | ग्रह | ग्टह |
| ८ | ७ | मू | भू | ३९ | ८ | प्रति | प्रल |
| ९ | १८ | व्य | व्य | ४० | ९ | वती | पती |

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

संकारयतितस्यमेभ्योलोकेभ्य उन्निनीषते ह्येष एवासाधुकर्म कारयति तम्यमधोनिनीषत" इत्यादीनि, कानिचिच्चन्द्रसूर्यानलवायुप्रभृतिसकलचेतनाचेतनव्यवस्थितज्योतिश्चक्रभ्रमणोर्ध्वज्वलनतिर्यग्गमनादिस्वभावविशेषव्यवस्थापकत्वप्रतिपादकानि ।
"एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतो भीषास्माद्वातः पवते भीषोदेति सूर्यो भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इत्यादीनि, कानिचिन्मोचकज्ञानसम्पादनद्वारामुक्तिप्रदत्वप्रतिपादकानि "यमेवैषवृणुते तेन लभ्यस्तस्यैष आत्मावृणुते तनुं स्वामित्यादीनि" एवम्भूतैः कारणवाक्यैस्तेषां शिवपर्यवसानप्रतिपादकतया तद्विकासकैः पुराणेतिहासरूपैरुपबृंहणैश्चकाराद्ब्रह्मसूत्रैश्चयस्मादरं प्रतिपादितं ब्रह्म तद्भवानेवेति तर्कयामोन्यायैर्निश्चिनुम इत्यर्थः। अत्र भवान् ब्रह्मेतिसामानाधिकरण्येन शिवस्य परब्रह्मभावः स्तोत्रप्रतिपाद्यो मुख्यार्थ इति सूचितम्। सचतत्वसाधकोपन्यासेन बाधकोद्धारणेन च प्रतिपादनीयः। तत्र साधकानि सर्वेषां कारणवाक्यानां शिवे पर्यवसानमापादयन्त्यौपनिषदानि वचनानीति प्रथमपादेन सूचितम्। तेषामन्यपरत्वशंकानिराकरणेन स्वाभिमतार्थे प्रामाण्यप्रतिष्ठापनमुपबृंहणमुखेन करिष्यत इति द्वितीयपादेन सूचितम्। भवान् परतत्वमित्यादिरीतिं विहाय भवान् ब्रह्मेत्युक्त्या यत्र शिवोवक्तव्यत्वेन निर्ज्ञातस्तस्मिन्निरुपपदब्रह्मपद प्रयोगः। यद्वाक्यं ब्रह्मविषयत्वेन निर्णीतव्यन्तत्वनिर्णायकत्वेन शिवाभिधानश्रुत्युपन्यासश्चद्वैपायनीयः। शिवपरब्रह्मभावप्रतिपादकश्रुत्यनुग्राहकत्वेन प्रदर्शयिष्यत इत्ययमर्थः सूचितः। निश्चिनुम इत्यनुक्त्वातर्कयाम इत्युक्त्या बाधकोद्धारः सर्वोपिन्यायैः प्रायशः करिष्यत इत्येतत्सूचितम् ॥ १ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तत्र तावत्प्रतिपादनीयार्थसाधकान्युपनिषद्वचनान्युपन्यस्यन्ते ।

यद्ब्रह्मलक्षणतया श्रुतिसूत्रसिद्धम्
तत्कारणत्वमनुमोदितया शिखाद्यैः ।
अत्याश्रमोपनिषदा हर चोदितानि
त्वय्येव कारणवचांसि समर्पयन्ति ॥२॥

यतोवेत्यादिश्रुत्या ब्रह्मसूत्रेण च सिद्धं यत्सम्राजः श्वेतच्छत्रमिव ब्रह्मणोऽसाधारणं लक्षणं जगज्जन्मजीवनादिकारणत्वं नाम तत्सर्वाणि कारणवाक्यानि त्वय्येव समर्पयन्तीति प्रतिज्ञा तत्र हेतुगर्भं विशेषणमत्याश्रमोपनिषदा चोदितानीति श्वेताश्वतराणाम्मन्त्रोपनिषदत्याश्रमोपनिषदित्युच्यते । "अत्याश्रमिभ्यः परमम्पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्" इति तत्रैव श्वेताश्वतरेण महर्षिणात्याश्रमिभ्यः प्रोक्तत्वश्रवणात्तस्यामुपनिषद्येव ब्रह्मवादिनोवदन्ति । किंकारणं ब्रह्मकुतस्मजाताजीवामकेन क्वचसम्प्रतिष्ठाः । अधिष्ठिताः केन सुखेतरेषुवर्तामहेब्रह्मविदो व्यवस्था" इति केषाञ्चिद्ब्रह्मवादिनामृषीणां ब्रह्म जगत्कारणमित्येतावदवगच्छतां विशिष्यतदजानतां तन्निर्णयार्थं विचारप्रवृत्तिरुक्ता तत्र किं कारणं ब्रह्मेति सामान्यतः कारणे ब्रह्मणि संदेहो दर्शितः । "कुतस्मजाता" इत्यादिभिः पञ्चभिर्वाक्यैः स एव कारणविषयः सन्देहः कार्यभूतजननजीवनादि प्रतियोगिभेदेन पञ्चधा प्रपञ्चितः । तत्र ब्रह्मविदोव्यवस्थेति पञ्चमेवाक्ये केनेत्यस्यानुषङ्गः । ततश्चन्द्रसूर्यादिवस्तु व्यवस्था विशिष्टावस्थारूपामुक्तिर्वाकेनेति तदर्थः आद्यव्याख्याने ब्रह्मविद इति विमृशतामेव परस्परसंबोधनम् । द्वितीयव्याख्यानेषष्ठी नन्वेवं विशेषविचारो निरालम्बः । ब्रह्मकारणमि-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्वस्यैवासिद्धेः कार्याणामन्या कारणत्वसत्ता कारणत्वस्य वोपप-त्तेरित्याशंकानिराकरणार्थन्तेषामेव स्वकीयसन्देहधर्मसिद्धिञ्च दर्श-नार्थोऽनन्तरमन्त्रः। "कालः स्वभावो नियतिर्यदृच्छाभूतानि यो-निः पुरुष इति चिन्त्यम्। संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः" नियतिर्यदृच्छेत्यकारणकत्वपक्षः। एवं सन्दिहा-नानां स्वतोनिर्णेतुमशक्तानां ब्रह्मविद्याधिदेवतायागौर्याः प्रसा-देन तन्निर्णयमिच्छतां तत्प्रसादार्थन्तद्ध्यानस्य तत्प्रसादेन तत्का-रणं ब्रह्मशिव एवेति तेषां निर्णय आसीदित्यर्थस्य च प्रदर्शना-र्थः। "तेध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्। यः कारणानि निखिलानितानि कालात्मयुक्तान्यधितिष्ठत्येक इत्युत्तरसन्दर्भः। तत्तद्धशिममन्त्रेषु "क्षरं प्रधानममृताक्षरं हरस्तस्मात्सर्वगतः शिवः। विश्वाधिकोरुद्रो महर्षिः। मायिन-न्तुमहेश्वरम्" इत्यादिष्वाम्नातैर्हरशिवरुद्रमहेश्वरनामभिस्तत्र-शिव एव जगत्कारण परब्रह्मरूपतया निर्णीत इतिस्पष्टम्। एवं शिवस्य जगत्कारणपरब्रह्मरूपनिर्णयोक्तिद्वारा सर्वाणि कारणवा-क्यानिशिवपरतां नयन्त्याश्वेताश्वतरोपनिषदः साक्षीभूतान्यथ-र्वशिखादिवचनान्यपि दृश्यन्ते। सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्तेस-म्प्रसूयन्ते सर्वाणिचेन्द्रियाणि सहभूतैर्नकारणम् कारणानां धाता ध्याता कारणन्तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरःशम्भुराकाशम-ध्ये" इत्यादीनि एव मथर्वशिखाद्यनुगृहीतैः श्वेताश्वतरोप-निषन्मन्त्रैः प्रेरितानिसदात्मब्रह्मादिसामान्यशब्दप्रयुक्तानि स-र्वाणि कारणवाक्यानि शिवमेव जगत्कारणम् परंब्रह्मेति प्रति-पादयन्तीत्यर्थः ॥ २ ॥

अथोदाहृत श्रुतीनामन्यपरत्वशंकाशूकनिरासार्थंपौराणिक वचनरूपोपबृंहणप्रदर्शनार्थोयंश्लोकः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पुष्पेषुशासनपुराणगिरोप्यनल्पा
स्त्वंब्रह्म नेतर इतिप्रतिपादयन्ति ।
शब्दार्थयोरधिगतादधिकैकरूप्या
न्मूलश्रुती रपिशिवः स्ववशन्नयन्त्यः ॥३॥

कूर्मपुराणे तावत्किंकारणं ब्रह्मेत्यादिवचनान्युपबृंहितानि । "समेत्यते महात्मानो मुनयो ब्रह्मवादिनः । वितेनिरे बहून्वादानात्मविज्ञान संश्रयान् । किमस्य जगतो मूलमात्मा वास्माकमेवहि । कोपिस्यात्सर्वभूतानां हेतुरीश्वर एववा । इत्येवं मन्यमानानां ध्यानकर्मावलम्बिनाम् । आविरासीन्महादेवी गौरी गिरिवरात्मजा" । इत्यारभ्य "निरीक्षितास्ते परमेशशक्त्या तदन्तरेदेवमशेष हेतुं । पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणमिति" । शिवपुराणेपि । मुमुक्षया पुराकेचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसोविमृशन्ति यथा तथम् । किंकारणम् कुतोजाता जीवामः केनवावयम् । क्वचास्माकंसम्प्रतिष्ठावर्धिताः केन वावयं । केनवर्तामहे शश्वत्सुखेष्वन्येषु वाऽनिशम् अविलंघ्याच विश्वस्य व्यवस्था केन वा कृता । कालः स्वभावो नियतिर्यदृच्छावावर्तते । भूतानियोनिः पुरुषोयोगो वैषां परोथवा । अचेतनत्वात्कालादेश्चेतनत्वे पिचात्मनः । सुखदुःखाभिभूतत्वादमीशत्वाद्विचार्यते । तेध्यानयोगानुगताः प्रापश्यन्शक्तिमैश्वरीम् । पाशविच्छेदिकांसाक्षान्निगूढां स्वगुणैर्भृशम् । तयाविच्छिन्नपाशास्ते सर्वकारणकारणम् । शक्तिमन्तं महादेवमपश्यन्दिव्यचक्षुषा । यःकारणान्यशेषाणिकालात्मसहितान्यपि । अप्रमेयोमया शक्त्या साकमेकोधितिष्ठतीत्यादिनाथर्वशिखोपबृंहणमपिशिवपुराणे । यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकं सहभूते

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

न्द्रियैः सर्वैः प्रथमं संप्रसूयते। कारणानाञ्च यो धाता ध्याता परम-कारणं। न संप्रसूयते न्यस्मात् तस्य न कदाच न सर्वैश्वर्यसम्पूर्णो नाम्ना सर्वेश्वरःस्वयम् । सर्वैमुमुक्षुभिर्ध्येयः शम्भुराकाश-मध्यग इति अथर्वशिरः कैवल्योपनिषदादीनामपि शिवैका-न्तिककारणत्वादि ब्रह्मलिंगसमर्पकाणामुपबृंहणान्यपि शिव-पुराणादिषु द्रष्टव्यानि। एवं शब्दतोर्थतश्चमूलश्रुत्येकरूपतया मूलश्रुतीनामप्यविचलांशिवपरतां प्रतिष्ठापयन्ति । वनसिंह न्यायेन स्वयं बलवन्ति सन्ति शिवैकान्तिकमेव जगत्कारण पर-ब्रह्मभावं व्यवस्थापयन्तीत्यर्थः । भूयोनुग्रहोपि देवतान्तरपर-पुराणेभ्यः प्राबल्यहेतुरनल्प इत्यनेन दर्शितः। प्रसिद्धश्चशिवपुरा-णानां भूयस्त्वमष्टादशपुराणेषु दशभिः कथ्यते शिवः । चतुर्भि-र्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः। इत्युक्तपुराणसंख्यया। वायु संहितायाम्। तदेवं लक्षमुद्दिष्टं शैवशाखाविभेदत इति शैवं लक्षं स्कान्दं लक्षमित्यादिग्रन्थसंख्यया च एवं वनसिंहन्या-यात्परस्परमनुग्राह्यानुग्राहकभावापन्नाभ्यां श्रुतितदुपबृंहणा-भ्यां शिवस्य परब्रह्मभावसिद्धिः प्रदर्शिता ॥ ३ ॥

अथ तस्मिन्निरुपपदब्रह्मपदप्रयोगेण तस्मिन्तत्सिद्धिं दर्शयति।

द्वैपायनः सभगवानितिहासरत्ने
धर्मात्मजेविटपिरूपकमादधानः ।
ब्रह्मेतिशंकरगिराव्यपदिश्यमूलम्
त्वंब्रह्मशाश्वतमितिप्रकटीचकार ॥ ४ ॥

महाभारते युधिष्ठिरो धर्ममयोमहाद्रुमः स्कन्धोर्जुनो भीम-सेनो ऽस्यशाखा। माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्मच ब्राह्मणाश्च" इति युधिष्ठिरस्य वृक्षत्वरूपणे ब्रह्ममूलमिति व्यप-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

दिशन् भगवान् व्यासः शिवः परब्रह्मेति प्रकटीचकारेत्यर्थः॥ ४॥

ननु ब्रह्मपदं शिवपरमिति नाद्यापि संप्रतिपन्नम्।
अस्ति हि ब्रह्मपदस्य विष्णौ ब्राह्मणजातौ
वेदे तपसि च व्यवहार इत्याशंक्याह।

विष्णुर्द्विजाश्च विषमाक्षपृथग्गृहीता
वेदस्तपोऽपि च न चेतनमध्ययोग्यम्।
वाच्या च तत्स्थितिकृतिः क्वचिदस्यवृत्ति
र्मूलत्वरूपणवशादिह निर्विशङ्कम्॥ ५॥

विष्णोर्द्विजानाञ्च पृथग्ग्रहणाद्वेदतपसोरचेतनयोश्चेतनमध्ये पाठाच्चोकारे प्रायपाठविरोधान्न तयोर्ग्रहणं युक्तम्। किन्तु ताभ्यामन्यस्यैव कस्यचिद्वृत्तस्थितौ मूलस्यैव राजभावोपगूढयुधिष्ठिरस्थितौ कारणभूतस्यैव ग्रहणं युक्तमित्यर्थः। तथाभूतश्च शिव एवेति हृदयम्। ननु द्रोणपर्वणि नारायणकृतशिवस्तोत्रे। "रूपंज्योतिः शब्द आकाशवायुर्दिवस्पर्शस्सलिलंगन्ध उर्वी। कालो धर्मो ब्रह्म च ब्राह्मणाश्च त्वत्सम्भूतंस्थास्नु चरिष्णु चेदम्" इति। ब्रह्मशब्दस्य ब्राह्मणशब्दसमभिव्याहारेण वेदपरत्वं दृष्टन्तथैहकिन्नस्यादिति चेन्न। तत्र रूपं ज्योतिरित्याद्यचेतनसमभिव्याहारेण तत्रचेतनप्रायपाठाभावादिह चेतनः शिव एव ग्राह्यः। ननु श्रीकृष्णस्य सर्वविधसाहाय्यकेन युधिष्ठिरराज्यस्थितिहेतुत्वं सुप्रसिद्धम्। ब्राह्मणानामपि जयाशिषा तद्धेतुत्वम्। "स्वयमाहृत्य वन्यानि ह्यनुयास्यामहे वयम्। अनुध्यानेन जप्येन विधास्यामः शिवं तवेति"। अरण्यं प्रस्थितं युधिष्ठिरमनुव्रजनेनानुग्रहीतुमिच्छतां ब्राह्मणानामेव वचनेन प्रसिद्धम्। न तथा शिवस्य तत्प्रसिद्धम्॥ ५॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अतः श्रीकृष्णसयात्यन्ततदुपकारकस्य विशेषणसमर्पकतया ब्रह्मेति पदं योजनीयमिति मन्दशंकामपाकरोति।

साह्येन कृष्ण इव तस्य हि राज्यसिद्धौ
वाशीमुखेन मुखजा इव च त्वमीश।
मूलं कपालधरानित्यमनुग्रहेण
तन्मध्यपाठविषयस्तदसि त्वमेव ॥ ६ ॥

प्रतिज्ञातमनुग्राहकत्वं तत्तदुपाख्यानेन स्फुटीकरोति ॥

कैरातपर्वणि तुरङ्गममेधवृत्ते
कैलासशैलगमने शतरुद्रिये च।
सौप्तिकादिषु च शंकर पाण्डवेषु
सानुग्रहत्वमधिकं हि तव प्रसिद्धम् ॥ ७ ॥

आरण्यपर्वणि किरातार्जुनीये। सकलदेवासुराद्यविज्ञातसकललोकभयंकरपाशुपतदिव्यास्त्रप्रदानेन शिवस्य पाण्डवानुग्राहकत्वं सुप्रसिद्धम्। द्रोणपर्वणि च जयद्रथवधार्थमविज्ञातविस्मृतपाशुपतास्त्रसन्धानप्रकारविशेषपरिज्ञानाय कृष्णार्जुनयोः कैलासगमनं तत्र शिवं प्रणिपत्य स्तुत्वास्थितयोः शिवनियोगेनामृतसरसि स्थितौ धनुःशरौ गृहीत्वा शिवस्य पुरतस्थापितवतोः शिवनियुक्तनीललोहितरुद्रकृतधनुःशरसन्धानदर्शनेन पाशुपतास्त्रसन्धानविशेष परिज्ञानञ्च प्रतिपादितम्। पाशुपतास्त्रलाभेन सिद्धश्चार्जुनस्योत्कर्षः। शल्यपर्वणि युधिष्ठिरं प्रति भगवता वर्णितः। "अक्षौहिण्यो दशाष्टौ च तव तेषाञ्च भारत। न तुल्याश्चार्जुनस्येह बलेन कुरुनन्दन। स एवसर्वाण्यस्त्राणि दिव्यानिप्राप्य शङ्करात्। मत्समो मद्विशिष्टोवा रणे भवति पाण्डव। द्रोणं-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

भीष्मं कृपं कर्णं द्रोणपुत्रं जयद्रथम्। निहन्तुं शक्नुयात्क्रुद्धो निमि-षार्द्धादरिन्दम। सदेवासुरगन्धर्वान् सयक्षोरगकिन्नरान्। त्रींस्त्रलो-कान्विजेतुं वै शक्तः किमुत मानुषान्। विधिना विहितस्त्वासौ मया सञ्चोदितोपि सन्। न चकार मतिं हन्तुं कृतान्तो बलवत्तरः। अ-र्जुनो हि महाबाहुर्मया तुल्यो महीपते। स महेश्वरलब्धास्त्रः किन्न-कुर्याद्विभुः प्रभो"। इति पाशुपतास्त्रमेव सर्वास्त्राग्रशस्तमिति वा सर्वास्त्रसममिति वाभिप्रायेण सर्वाण्यस्त्राणि प्राप्य शङ्करादि-त्युक्तम्। द्रोणपर्वण्येव शतरुद्रीये शिवेन युद्धसमये कृतम्महासा-हाय्यकं प्रतिपादितम्। अश्वमेधिके पर्वणि तदेव युद्धे कृतं साहा-य्यकं युद्धसमये पाण्डवशिबिरं शिवनियुक्तेन केनचिन्महताभूतेन मदाशिबिरद्वारसन्निहितेन संरक्षितमित्यादि भीमसेनेनार्जुनं युधिष्ठिरं प्रतिचस्मारितम्। मोक्षधर्मे कृष्णेनार्जुनं प्रति स्मारितम्। सौप्तिके पर्वणि च। पञ्चेन्द्रोपाख्याने पञ्चेन्द्रान् प्रति युष्माभिर्मा-नुषैर्भूत्वा तत्रासुरावताररूपसकलदुष्टक्षत्रियवधं कृत्वा प्रत्याग-न्तव्यमिति नियोगवचनेन स्वस्य तदीयजयोपयोगिसर्वकार्यधूर्व-हत्वमाविष्कृतन्तदेतत्सर्वमत्र संगृहीतम् ॥ ७ ॥

कृष्णाद्यपेक्षयाप्यधिकं शिवस्य युधिष्ठिरराज्यस्थितिहेतुत्वं शतरुद्रीयाद्युपाख्यानसिद्धमेव कण्ठतः प्रतिपादयति।

प्रत्यक्षमेव भवता निहताकुरूणाम्
सेना ततस्तुनिहता मघवत्सुतेन।
युक्तं किमेतदतिशायियुधीष्ठिरार्थे
मूलं त्वदन्यादिह मुग्धमृगाङ्कमौले ॥ ८ ॥

शतरुद्रीयाद्यध्याये "संग्रामे शात्रवान्निघ्नन् शरौघैर्विमलैरहम्। अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम्। ज्वलन्तं शूलमुद्यम्य यान्दि-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

शं प्रतिपद्यते। तस्यान्दिशि विशीर्यन्ते शत्रवो मे महामते। पद्भ्यां न स्पृशते भूमिं न च शूलं विमुञ्चति। शूलाच्छूलसहस्राणि निष्पतन्त्यस्य तेजसा। तद्भग्नांस्तानरीन्सर्वान्मद्भग्नान्मन्यते जनः। तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम्। भगवंस्त्वं ममाचक्ष्व को वै सपुरुषोत्तमः। शूलपाणिर्महान् क्रुद्धस्तेजसा सूर्यसन्निभः"। इत्यर्जुनस्य प्रश्ने। "प्रजापतीनां प्रवरस्तेजसां प्रवरं प्रभुम्। भुवनानांप्रभुं देवं सर्वलोकमहेश्वरम्। ईशानमीश्वरन्देवं दृष्टवानसिशङ्करम्। शरणं प्राप्य कौन्तेय वरदम्भुवनेश्वरम्"। इत्यारभ्य प्रवृत्तानि व्यासवचनानि। "स शिवस्ताततेजस्वी प्रसन्नो याति तेग्रतः। तस्मिन् घोरे महारौद्रे संग्रामे रोमहर्षणे। द्रोणकर्णकृपैर्गुप्तामहेष्वासैः प्रहारिभिः। कस्तां सेनां नरः पार्थ मनसापि प्रधर्षयेत्। ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात्। स्थातुमुत्सहते कश्चिन्नचास्मिन्नग्रतस्थिते। नहि भूतं समन्तेन त्रिषु लोकेषु विद्यते। गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः। विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च। तस्मै नमस्कुर्वाणा-देवास्तिष्ठन्ति वै दिवि। ये चान्ये दानवा लोके येच स्वर्गजितो नराः। ये भक्ता वरदन्देवं शिवं रुद्रमुमापतिम्। इह लोके सुखं प्राप्य ते यान्ति परमां गतिम्। नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा" इत्यादीनि। भीमसेनेनाप्ययमर्थो हयमेधोद्योगे युधिष्ठिरं प्रतिस्मारितः। "वयं सर्वे च तद्भक्ताः सचास्माकं प्रसीदति। तत्प्रसादादाहयं राज्यं प्राप्ताः कौरवनन्दन। कस्तां सेनाम्महाराजमनसापि प्रधर्षयेत्। द्रोणकर्णमुखैर्गुप्ताम्महेष्वासैः प्रहारिभिः। ऋते देवाम्महेश्वष्वासाद्बहुरूपान्महेश्वरात्। तस्यैव च प्रसादेन निहताः शत्रवस्त्वविति" एवमनेक स्थले सुप्रसिद्धार्थश्लोकेन संगृहीतः॥ ८॥
CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ननु मयैवैतेनिहताः पूर्वमेव निमित्तमात्रम्भवसव्यसाचिन्निति सावधारणभगवद्वचन विरुद्धोयमर्थ उक्त इत्याशङ्क्याह ।

उक्तम्मयैव निहता इति शौरिणा यत्
तत्रैवतोविजय एव परं निरास्यः ।
साह्यं सशौरिरपि यस्य बलेन चक्रे
तेषाम्महेश तव तस्य कथं निरासः ॥ ९ ॥

मयैव निहता इत्येवकारेण केवलमर्जुन एव व्यावर्तनीयः । निमित्तमात्रम्भवसव्यसाचिन्निति वाक्यशेषात् । तत्रशिव प्रसंगाभावाच्च । किंच श्रीकृष्णस्य पार्थसारथ्यं कुर्वतस्तदानीं प्रसक्तापन्निवारणमपि शिवप्रसादबलाधीनमिति द्रोणपर्वणिवर्णितम् । तत्र द्रोणवधानन्तरम् । कृष्णार्जुनयोरधिक्रोधेन परितः क्रोश पर्यन्तपरिदृश्यमानसकृष्णार्जुनसकलपरिपन्थिसैन्यभस्मीकरण मुद्दिश्याश्वत्थाम्नाग्नेयास्त्रे प्रयुक्ते तेनचास्त्रेण तथैव सगजाश्वरथे सर्वस्मिन्नर्जुनसैन्ये भस्मीकृते तन्मध्यलग्नौ कृष्णार्जुनावपि तथैव जातावित्यश्वत्थाम्नः सर्वेषामप्यन्येषां निश्चये जाते तदस्त्रशान्त्यनन्तरं यथापूर्वं रथे परिभ्राजमानौ कृष्णार्जुनौ दृष्ट्वा चिन्ताशोकपरीतंधिग्धिक् स्वास्त्रमाहात्म्यं शास्त्रं मिथ्येति रथादवरुह्यरणाजिराद्द्रुतं यदृच्छया तत्र समागते वेदव्यासे दृष्टेतमभिवाद्य । "नासुरामरगन्धर्वा न पिशाचानराक्षसाः । न नागयक्षपतगा न मनुष्याः कथञ्चन । उत्सहन्ते न्यथाकर्तुमेतदस्त्रं मयेरितम् । तदिमां केवलां हत्वा एकामक्षौहिणीं ज्वलत् । कथम्मानुषधर्माणौ नाधाक्षीत् केशवार्जुनौ" इति पृष्टवन्तमश्वत्थामानं प्रति वेदव्यासेन । "महान्तमेनमर्थं मां यतत्वं पृच्छसि संशयात् । तत्तेहं संप्रवक्ष्यामि सावधानमनाः शृणु । योसौ नारायणो देवः

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पूर्वेषामपि पूर्वजः। आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः। आद्यः सर्वस्य लोकस्यानादिनिधनोऽच्युतः। व्याकुर्वते यस्य तत्वं श्रुतयोमुनयश्चह। अजोऽजेयः सर्वभूतैर्मनसापि जगत्पतिः। तस्मादिमं जेतुमिच्छन्नज्ञानतमसावृतः। माशुचः पुरुष व्याघ्र विद्धि तद्वदिहार्जुनम्" इति कृष्णार्जुनयोर्जेतुमशक्यत्वमुक्त्वातदनन्तरं सविशेषन्तत्कारणमुक्तम्। नारायणस्यांशभूतेन वर्षाणां षष्ठि सहस्राणि षष्ठिशतानि च मैनाके तपस्तप्त्वा तत्र कृतसन्निधानं शिवं बहुधा स्तुत्वा "भक्तं हि माम्भजमानम्भजस्व" इति प्रार्थना पूर्वकमितर दुर्लभा वरा बहवः प्रार्थिताः। ते च वरास्तस्मै शिवेन "मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु। अप्रमेय बलात्मा च नारायण भविष्यसि। न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः। न पिशाचानगन्धर्वा न नरा न च राक्षसाः। न सुपर्णास्तथा नागा न विश्वो विश्वयोनयः। न कश्चित्त्वाञ्च देवोपि समरेषु विजेष्यति। न शस्त्रेण नचास्त्रेण नाग्निना नच वारिणा। नार्द्रेण न च शुष्केण त्रसुना स्थावरेण च। न हस्तेन न पादेन न काष्ठेन न लोष्टुना। कश्चित्तवरुजः कर्तामत्प्रसादात्कथञ्चन। अपिचेत्समरं प्राप्य भविष्यसि ममाधिक" इति। दत्ता इति तदनन्तरं व्यासेन। "एवमादीन् वरान् लब्ध्वा प्रसादादथशूलिनः। स एव देवश्चरति मायया मोहयन् जगत्। तस्यैव तपसा जातो नरोनाम महामुनिः। तुल्यस्तेनैव देवेन तं जानीह्यर्जुनं सदा" इति। स एव नारायणः कृष्णरूपेणावतीर्ण इति। तस्यैव तपसा तत्तुल्यतां प्राप्तो नरोप्यर्जुनरूपेणावतीर्ण इति चोपदिष्टम्। अत्र कृष्णार्जुनयोराग्नेयास्त्रानभिभूतत्वे न नाग्निना न च वारिणेति शिववरप्रदानं कारणमेवेति स्पष्टमेवोक्तम्। सौप्तिकपर्वणि च कृष्णाराधान प्रीतेन शिवेन कृष्णकृतपाण्डव साहायकनिर्वाहार्थं पाण्डवशिबिरसंरक्षणं कारित-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

मिति वर्णितम्। तत्र ह्येवमुक्तम्। अश्वत्थाम्ना दुर्योधनवधानन्तरमतिकुपितेन पाण्डवपाञ्चालसहितसकलपाण्डवशिबिरसंहरणं करिष्य इति संकल्प्य रात्रौ तदीयशिबिरद्वारं गतेन महद्भूतमतिभयङ्करं रौद्राकारं सहस्रनयनन्दृष्टम्। तत्राश्वत्थाम्ना विसृष्टानि सर्वाण्यस्त्राण्यायुधानि च तेन निगीर्णानि। ततश्चिन्ताकुले द्रौणाहवेतदापन्निस्तरणार्थं शिवं प्रपद्य इति संकल्प्य तदर्थमुत्सहमाने तस्य पुरस्तात्पर्वताकारा महती वेदिः प्रादुर्भूता। तस्यां ज्वालामालाजटिलो महानग्निः प्रादुर्भूतः। ततः संख्यातीता भूतप्रमथरुद्राः शान्तघोररूपा नानाविधायुधवाद्यादिधराः प्रादुर्भूताः। ततस्तस्मिन्नेवाग्नावात्मानमुपहारं निवेद्य शिवं प्रीणयामीति निश्चित्य मन्त्रेण स्वात्मानं हविर्निवेद्योर्ध्वबाहुराग्निं प्रविष्टे ततः प्रादुर्भूतः शिवस्तम्प्रति। "सत्यशौचार्जवत्यागैस्तपसा नियमेन च। क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा। अहं यथावदाराध्यः कृष्णेनाक्लिष्टकर्मणा। तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते। कुर्वता तस्य सम्मानन्त्वञ्च जिज्ञासता मया। पाञ्चालाः सर्वथा गुप्ता मायाश्च बहुशः कृताः। अतस्तस्यैव सम्मानात्पाञ्चाला रक्षिता मया अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम्" इति। उवाचेति। अत्र कृष्णकृतसमाराधनप्रीतेन शिवेन कृष्णकृत प्रतिज्ञानिर्वाहार्थमेव पाञ्चालादिसंरक्षणमेतावत्पर्यन्तं कृतमिति स्पष्टमेव एतदपि कृष्णः स्वभक्त इति तत्र बहुमानात्कृतमिति एतदतितरांस्पष्टयितुमेव शिबिरद्वारि प्राग्दृष्टस्य भूतस्य नयनादि निर्गतार्चिर्भ्यः संख्यातीतानां कृष्णानां प्रादुर्भाव उक्तः। "नैतदस्य पुनः शक्यम् प्रवक्तुं द्रष्टुमेव वा सर्वथातु तदालोक्य स्फुटेयुरपि पर्वताः। तस्यास्यान्नासिकायाश्च श्रवणाभ्याञ्च भारत। तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः। तथातेजोमरीचिभ्यः शंखचक्रगदाधराः।



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आदुरासन् हृषीकेशाः शतशोऽथसहस्रशः”। एवं यत्प्रसादात्कृष्णेनापि पाण्डवानां साम्राज्यकं कृतम् तस्य मयैव निहता इत्येवकारेण व्यावर्तनमत्यन्तमनुचितमित्यर्जुनमात्रव्यावर्तनन्तदर्थं इत्यकामेनापि स्वीकरणीयमितिभावः ॥ ९ ॥

एवं मयैव ते निहता इत्यस्य कृष्णवाक्यत्वमंगीकृत्यावधारणस्य गतिरुक्ता। वस्तुतः शिववाक्यमेव तदिति परिहारान्तरमाह ॥

**यद्देव दर्शितवता हरिणा तथोक्तम्**
**तद्विश्वरूपमपि तावकमेव मन्ये।**
**पार्थाय नाथितवते पररूपमिष्टम्**
**तेन त्रिलोचन तेदवीह दर्शनीयम् ॥१०॥**

विश्वरूपन्दधताहि कृष्णेन तद्वचनमुक्तमतस्तद्रूपं यदीयं तस्यैव तद्वचनमितियुक्तम्। एतच्च शैवं रूपमिति पूर्वापरपर्यालोचनयावसीयते। तथाहि।“इहैकस्थं जगत्कृत्स्नं पश्याद्यसचराचरम्। ममदेहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसीति श्लोकेन मम विश्वरूपात्मकं रूपमन्यद्द्रष्टुमिच्छसिचेत्तत्पश्येत्यर्जुनेन पृष्टस्योत्तरमुक्ता यच्चान्यद्द्रष्टुमिच्छसीति”। इति भगवतोक्तम्। अस्यायमर्थः। यच्चान्यज्जयपराजयादि यच्छङ्कसे यद्वाजयेम यदि वा नो जयेयुरिति तदपि द्रष्टुमिच्छसि चेत्पश्य” इति। तेन दुर्योधनादि सकलशत्रुसंहारप्रधानं रूपं दर्शयामीति भगवता सूचितम्। तथाभूतमेव च रूपन्तेन दर्शितम् दृष्टवता चार्जुनेन तदनुवादः कृतः। “अमी च त्वा धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः। भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः। वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

भयानकानि । केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमांगैः । लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समस्तान्वदनैर्ज्वलद्भिः । तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो"। इति तदनन्तरमर्जुनेन जगत्संरक्षकस्य विष्णोस्तव न भवतीदं सकलजगत्संहारकमतिभयंकरं रूपं त्वया प्रदर्शितमित्यभिप्रायेण"आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद । विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम्"।इति पृष्टेन भगवता सकललोकसंहर्तृ कालाग्निरुद्ररूपं मया प्रदर्शितमित्युक्तम् । "कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः । ऋतेऽपि त्वां न भविष्यन्ति लोके येऽवस्थिताः प्रत्यनीकेषु योधा"इति । अतो जगत्संहारार्थं सर्वं कालाग्निरुद्ररूपं दधानस्य शिवस्यैवेदं रूपमिति युक्तम्। ननु कृष्णे नशैवं रूपं प्रदर्शितमिति कथमिदमुपपद्यताम्।"द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम"इति। अर्जुनेन तदीयमेव खल्वाद्यमैश्वरं रूपं प्रदर्शनीयमिति प्रार्थितम्। उच्यते। तत्प्रार्थनानुसारेण यदेव वस्तुतः कृष्णस्य सर्वत्रोपपाद्यं रूपन्तदेवाभिप्रदर्शनीयम्। तच्च वस्तुतो वैष्णवरूपस्यापि मूलभूतं शैवमेव रूपमिति तत्प्रदर्शने कानुपपत्तिः । यदि चाभेदो नेष्यते तदापि नानुपपत्तिः । अर्जुनेन खलु सर्वात्मकमाद्यमैश्वरं रूपं प्रदर्शनीयमिति पृष्टन्तत्तु वस्तुतः शैवमेवरूपमित्यभिप्रेत्य योगमाहात्म्यात्कृष्णेन तदेव प्रदर्शितमित्युपपत्तेः।"न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यन्ददामि ते चक्षुः पश्य मे योगमैश्वरम्" इति करिष्यमाणरूपप्रदर्शनस्य ईश्वरविषयस्वकीययोगशक्त्यतिशयरूपस्य कृष्णं नैवोक्तत्वात्। यद्येवम्। एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटीत्यादिसन्दर्भे भीतस्यार्जुनस्य यानि कृष्णं प्रति वचनानि तानि कथमुपपद्यन्तामेतानि हि कृष्णस्तुति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वचनानि प्राचीनस्वापराधमर्षणप्रार्थनासहितानि कृष्णस्यैव तद्रूपान्तरं स्वेन दृष्टमित्यर्जुनस्याशयं गमयन्तीतिचेत् । यद्यभेदस्तदा न काचिदनुपपत्तिः । यदि स नेष्यते तदाप्येवम्भूतशिवयोगनिष्ठत्वरूपमाहात्म्यातिशयदर्शनेन स्तुत्यादिकमिति तदुपपत्तेः । तदनन्तरमपि मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगादिति भगवता तस्य विश्वरूपप्रदर्शनस्य योगप्रभावप्रयुक्ततया प्रतिपादनात् । गीतासु क्वचित्कृष्णेन मदीयरूपमित्युक्तम् । क्वचिद्योगप्रभावदर्शितमैश्वरं रूपमित्युक्तम् । क्वचित्परब्रह्मलिङ्गवर्णनम् । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्यादिगतैरहमादिशब्दैर्दर्शितम् । क्वचित्तमेव चाद्यं पुरुषं प्रपद्ये । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठतिभ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छेत्यादिना । ईश्वरनामधेयशिवविषयमहिमवर्णनन्तत्सर्वमतिविरुद्धमिव च लक्ष्यते किमभिप्राया गीतासु भगवत्सूक्तय इति सन्दिहानेनार्जुनेनानुगीतावतारे पुनः पृष्टस्य भगवतो न शक्यन्तन्मयाभूयस्तथा वक्तुमशेषतः । परंहितं ते कथितं योगयुक्तेन तन्मयेति वचनदर्शनाच्च । तस्मात्सर्वथा कृष्णेन शिवाभेदेन शिवयोगसामर्थ्यलब्धशिवाहम्भावनया वा शैवरूपप्रदर्शने न काचिदनुपपत्तिः ॥ १० ॥

भगवता शैवं रूपमेव दर्शितमित्यत्र गमकान्तरमाह ।

युक्तन्तदेतदत एव हि मोक्षधर्मे
तेनार्जुनं प्रति निजंवपुरास्थितेन ।
देवेन तेन निहतान् हतवानसीति
त्वय्येव तद्वचनपर्यवसानमुक्तम् ॥११॥

"निहतांस्तेन पूर्वं त्वं हतवानसि वै रिपून् । अप्रमेयप्रभावं-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्वन्देवदेव मुमापतिम्। भजस्व नित्यम्प्रयतो विश्वेशं हरमव्ययम्"
इति श्रीकृष्णस्यार्जुनं प्रतिवचनम्। अनेन शब्दतोऽर्थतश्च एकरूपं मयैवैते निहता इति वचनम् शिवचनमिति स्वरूपमास्थितेन श्रीकृष्णेनैव स्फुटीकृतम्। तत्र च शिववचने पूर्वमेव निहता इत्यस्यायमभिप्रायः। यदानालायनीसन्निधौ पञ्चेन्द्रान्प्रति शिवेनोक्तम्। एषा भार्या भविता वो न संशयो योनिंसर्वे मानुषीं संविशध्वम्। तत्राहत्युयं कर्म्मकृत्वा ऽविषह्यं बहून्न्यान्निधनं प्रापयित्वा शस्त्रैर्दिव्यैर्मानुषान्योधयित्वा शूरान्सर्वानाहवेतान् विजित्य। आगन्तारः पुनरेवेन्द्रलोकं स्वकर्म्मणा पूज्यतमम्महार्हमिति। तदेवैते निहता इति। ऋषीणाम्पुनराद्यानां वाचमर्थोऽनुवर्त्तत इति ऋषीणाम्माहात्म्यमवगच्छन्तो वदन्ति। किमु वक्तव्यम् विश्वाधिको रुद्रो महर्षिरिति प्रसिद्धस्य महर्षेः शिवस्य वचनन्तथैवार्थं फलतीति। एवमभिप्रायकल्पन एव पूर्वमेवेत्यस्य सर्वपूर्वभावविषयतया सामञ्जस्यम्भवति। न तु कृष्णवाक्यत्वे। नारायणस्य कृष्णरूपेणावतीर्य पाण्डवसाहाय्यकम् कार्यमिति सङ्कल्पस्याप्युदाहृतशिववचनानन्तरसमुदितत्वेनादिपर्वणि पञ्चेन्द्रोपाख्यान एव वर्णितत्वात्। तस्मादुदाहृतमीत्वधर्म्मवचनानुसारेण पूर्वमेवेत्येतत्सामंजस्यानुसारेण च मयैवैत इत्यादि शिववाक्यन्तद्वक्तृविश्वरूपविग्रहस्य शैव एवेति युक्तम्। गीतास्वन्यत्र च तत्र तस्य विश्वरूपविग्रहस्य कृष्णेन स्वकीयत्वं यद्व्यवहृतम्। तस्य सर्वस्याप्यभेदेन शिवाहम्भावनयावोपपत्तेः॥ ११॥

इतोऽप्येवमेवेत्याह।

प्रागुक्तसर्वमहिमोपचितं हि तत्र
रूपं परं शिव दिदृक्षितमर्जुनेन।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

गीतोदितश्च महिमा सकलोपिनाथ
स्पष्टन्त्वदीय इति कौर्म्मगिराप्रतीमः ॥१२॥

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्यादिना विश्वरूपाध्यायात्प्राक्भगवता यावान्महिमा वर्णितः तावदुपचितं हि रूपं द्रष्टव्यमित्यर्जुनस्य प्रार्थना। "भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया। त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम्"। एवमेतद्यथात्थ त्वमात्मानम्परमेश्वर द्रष्टुमिच्छामि ते रूपं ऐश्वरं पुरुषोत्तमेति । तद्वचनात् प्रागुक्तः पश्चाद्वक्ष्यमाणश्च सर्वोपि परभावसूचको महिमा शैव एवेति कूर्म्मपुराणवचनैरवगम्यते। तत्र खलु ईश्वरगीतायां शिवस्य सकलमहिमानं शिवेनैव सनत्कुमारादिभ्य उपदिष्टं वर्णयित्वा वेदव्यासेनैव कथितम् । "सनत्कुमारो भगवान्संवर्तायमहामुनिः। दत्तवानैश्वरं ज्ञानं सोपि सत्यव्रतायतु। सत्यव्रतोपि योगीन्द्रः पुलस्त्याय महर्षये । प्रददौ गौतमायाथ पुलस्त्यश्च प्रजापतिः। अंगिरा वेदविदुषे भरद्वाजाय दत्तवान्। जैगीषव्याय कपिलस्तथा पंचशिखाय च। पराशरोपि सनकात्पिता मे सर्वतत्ववित् । लेभे तत्परमं ज्ञानन्तस्माद्वाल्मीकिरात्मवान् । मामुवाच पुरा देवः सतीदेहभवाङ्गजः। वामदेवो महायोगी रुद्रः किल पिनाकधृक् नारायणोपि भगवान्देवकीतनयो हरिः। अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम्। यदाहं लब्धवान् रुद्राद्वामदेवादनुत्तमम्। विशेषात् गिरिशे भक्तिस्तस्मादारभ्य मे ऽभवत्"। इति। एवमेवार्जुनम्प्रत्यपि वेदव्यासेन कथितमिति कूर्मपुराणवचनम्। "ज्ञानन्तदैश्वरन्दिव्यं यथावद्विदितन्त्वया। स्वयमेव हृषीकेशः प्रीत्योवाच सनातनम्। गच्छ गच्छ स्वकं स्थानं न शोकं कर्त्तुमर्हसि। भजस्व परया भक्त्या शरण्यं शरणं शिवम्"। इति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तस्माद्भगवद्गीताया ईश्वरगीतानुवादरूपत्वात्तदर्थं एव पर्यवसानं वक्तुं युक्तमित्यर्थः ॥ १२ ॥

मूलभूतेश्वरगीतार्थालोचनयैव भगवद्गीतार्थालोचनया श्रुत तदुपदिष्टार्थार्जुनव्यवहारपर्यालोचनया च भगवद्गीतायाः शिवपरत्वमुपपादयति ॥

गीतासु यच्छरणमीश्वरमेव कुर्वि

त्युक्तं सुरेन्द्रतनयं प्रति माधवेन ।

उक्त्वा करिष्य इति तेन तवैव पूजा

यच्च व्यतन्यत ततोपि तथाप्रतीमः ॥ १३ ॥

भगवद्गीतासु "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानम्प्राप्स्यसि शाश्वतम्"। इति। यद्भगवतोपदिष्टन्तत्। तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणीति। भगवता यत्स्वेनापि क्रियमाणमीश्वरप्रतिपादनन्तत्तद्विषयमेव कथमवगम्यते। तमेव चाद्यमित्यत्र कं पुरुषं प्रपद्य इत्याकांक्षायाम्। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर" इति प्रतिपादनीये पुरुषे शिवासाधरणस्येश्वरनाम्नः प्रयोगात्। तस्यैवेश्वरः सर्वभूतानामित्यत्रापि श्रवणात्। यत्तु "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इति श्लोकानन्तरम् "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः अतोस्मिलोके वेदे च प्रथितः पुरुषोत्तम" इति भगवता क्षराक्षरातीतत्वेन स्वस्यापि ताभ्यामुत्तमत्वमुक्तम्। तदीश्वराभेदात्तद्विषययोगाद्वोपपादनीयं पुरुषोत्तमनामधेयात्प्रथमश्रुतस्येश्वरनाम्नो बलवत्तया प्राधान्यानु-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

बोधेन नेयत्वाच्च । स्थितोस्मि गतसन्देहः करिष्ये वचनन्तव" इति । प्रतिज्ञातवानर्जुनो यावज्जीवं शिवपूजानिरत एवावर्त्तत । तेनापि गीतासु कृष्णेन शिव एव सकलपरभाव लिङ्गमहिमशालित्वेन मुमुक्षुभिः शरणीकरणीयत्वेन चोपदिष्ट इत्यवसीयते एतेन तमेवशरणं गच्छेत्याद्यनन्तरं सर्वगुह्यतमम्भूयः शृणु मे परमं वच इत्युपक्रम्य "सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज" इति यदुपदिष्टं तत्तद्विषयं तदनन्तरं करिष्ये वचनन्तवेतितं प्रति वचनमित्यपि शङ्का निरस्ता । तथा सति शिवपूजामपि परित्यज्य विष्णुपूजाया एवार्जुनेन कर्त्तव्यत्वापत्तेः । यावज्जीवन्तेन शिवपूजैव कृता न विष्णुपूजा । यत्तु शिवस्य रात्रिकर्त्तव्य नित्यपूजार्थं कृतः सर्वोप्युपहारः कृष्णे समर्पित इति वचनन्तदपि कृष्णमूर्त्तौ शिवाविर्भावोस्तीति शिवाराधन बुध्येत्ये तदभिप्रायम् । अत एव कृष्णार्ज्जुनयोः कैलासगमने सर्वोप्युपहारः शिवसमीपे दृष्टोर्जुनेनेत्युक्तम् । तच्चोपहारं सततं नैशं नैत्यकमात्मनः । ददर्श त्र्यंबकाभ्यासे वासुदेवे निवेदितम्" । इति । यद्यपि अत्र । गीतायाः सुष्ठु गिरः सत्यामहीपते । दर्शितम्मम सर्वस्त्वन्तेनासौ हतवान् रिपूनिति युधिष्ठिरं प्रति कृष्णवचनानुसारेण करिष्येवचनं तवेति वचनं युद्धमात्रविषयं स्यात् । तथाप्यनन्याश्चिन्तयन्तो मांमेकं शरणं व्रज । अन्तवत्तु फलन्तेषान्तद्भवत्यल्पमेधसाम्" । इत्यादि भगवद्वचनं श्रुतवताप्यर्जुनेन देवतान्तरम्परित्यज्य शिवपूजनमेव कृतमिति नास्ति विवादः । अतो गीतासु स्वेन नित्यं पूज्यमानस्य शिवस्यैव महिमोपदिष्ट इति निश्चयोस्तीति कल्पनीयम् । अनुगीतावतार प्रश्नानुसारेण गीताश्रवणसमये संशयकल्पं ज्ञानमनुगीता श्रवणानन्तरं दृढनिश्चय इति वा कल्पनीयम् ! तस्मात्कृष्णात् ब्राह्मणेभ्यश्च शिवस्यातिशयेन पाण्डवसंरक्षकत्वात् मूलं कृष्णो ब्रह्म च

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ब्राह्मणाश्च इत्यत्रमूलत्वेन निरूपणमावश्यकमिति तत्र निरुप-पदं ब्रह्मेति पदं शिवः परं ब्रह्मेति व्यंजयितुं प्रयुक्तमित्येतद्व्यलेपायितम् ॥ १३ ॥

एवं शिवे निरुपपद ब्रह्मपदं प्रयुंजानेन श्रीवेदव्यासेन शिवस्य परब्रह्मभावो व्यंजित इति समर्थितम्। अथ कठवल्लीमन्त्रस्य परब्रह्मपरत्वनिर्णये शिवाभिधानश्रुतिन्तत्र हेतुं कुर्वताऽपि तेन स व्यंजित इति दर्शयति ॥

अङ्गुष्ठमात्रमधिसूत्रगणं पुमांसम्
ब्रह्मेति यच्छुकगुरुः स विनिर्णिनाय ।
ईशान इत्यभिधया त्वयि क्लृप्तरूढ्या
त्वां ब्रह्म तेन च शिवस्फुटयाञ्चकार ॥१४॥

कठवल्लीषु पठ्यते। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सत इति। योंगुष्ठमात्रः पुरुषस्तमीशानं विदित्वा तदनन्तरं न विजुगुप्सते आत्मानं गोपयितुं नेच्छत्यभयप्राप्तत्वादित्येवं विदित्वेत्यध्याहारेण मन्त्रार्थो वर्णनीयः। अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तदित्यादीनि च तत्र मन्त्रान्तराणि पठितानि। तत्र ब्रह्ममीमांसायाम्। "अङ्गुष्ठमात्रः पुरुषोजीवः परिच्छिन्नपरिमाणत्वादिति पूर्वपक्षे प्राप्ते सिद्धान्तितम्। शब्दादेव प्रमित इत्यधिकरणे। प्रमितः परमात्मा। शब्दात् ब्रह्माभिधानश्रुतिरूपादीशानशब्दादेवेति । आस्तामीशानशब्द योगोपस्थितमैश्वर्य लिंगंशीघ्रावगतादीशानशब्दादेव प्रमितः परमात्मेतिनिर्णेतुं शक्यमित्येवकारार्थः । न च भूतभव्यस्येत्यैश्वर्यप्रतियोग्युपादानात्केवलमैश्वर्यरूपलिंगमम-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

र्पक एवायमीशान शब्दो न तु देवतासमर्पकोपीति शंकनीयम्। प्रतियोगिविशेषोपादानेपि ईशानशब्दस्य रूढ्या देवताविशेषोपस्थितेरनिवार्यत्वात्। तदेतदस्माभिः शिवतत्वविवेकादिषु प्रपञ्चेनोपपादितम्। अपरिच्छिन्नस्यापि परमेश्वरस्याङ्गुष्ठमात्रत्वं हृदयकमलावच्छिन्नत्वेन लिङ्गरूपतयोपपद्यते। अत एव हंसोपनिषदि हृदयकमलावच्छिन्नस्य ब्रह्मणो लिङ्गरूपत्वमुक्तम्। एषोसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तन्तस्याष्टधा वृत्तिर्भवति पूर्वदले पुण्ये मतिराग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रौर्ये मतिर्नैऋते पापे मनीषा वारुण्यां क्रीड़ा वायव्ये गमनादौ बुद्धिः सौम्यरति प्रीतिरीशाने द्रव्यादानं मध्ये वैराग्यं केसरे जाग्रदवस्था कर्णिकायां स्वप्नो लिङ्गे सुषुप्तिरिति हृदयकमलावच्छिन्ने ब्रह्मणि खलु जीवस्य सुषुप्तिः सकलश्रुति सिद्धा। तदभावो नाडीषु तच्छ्रुतेरात्मनिचेत्यधिकरणे च समर्थिता। अतोत्र ब्रह्मणि सुषुप्तिरिति वक्तव्ये लिंगे सुषुप्तिरिति यदुक्तं तेन ज्ञायते हृदयकमलावच्छिन्नन्तदङ्गुष्ठपरिमाणलिङ्गाकारतयोपासनीयं ब्रह्म श्रुत्या विदधितमिति। वामनपुराणेपि देवान् प्रति विष्णुना हृदयस्थस्येश्वरस्य लिङ्गरूपत्वमुक्तम्। "तथाव्ययात्मा स हरिस्तद्धृत्पङ्कजशायिनम्। दर्शयामास देवानाम्मुरारिर्लिङ्गमैश्वरम्" इति ॥ १४ ॥

एवं श्रुतिपुराणेतिहासन्यायसूत्रपर्यालोचनया लब्धानि शिवस्य परब्रह्मभावे साधकानि दर्शितानि। अथ तत्र बालिशैः प्रलपितानि बाधकान्युद्धर्तुं प्रतिजानीते ॥

एवं प्रमाणपरिपाटिकया विशङ्कम्
ब्रह्मत्वमित्यवधृतेपि जलन्धरारे।
आरोपितैस्त्वयि परं जननादिदोषैः

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्वं ब्रह्म नेति वदतः प्रतिबोधयामः ॥ १५ ॥

परोद्भावित जननादिसकलदोषसाधारणं परिहारमाह ॥

कल्पादिषु द्रुहिणकेशवरुद्ररूपैः
त्वत्तस्त्वमेव भगवन्प्रविभागमाप्तः ।
तैरेव तेषु विषमाक्ष परस्परस्मात्
आविर्भवन्ननु करोषि जयैषिवृत्तिम् ॥१६॥

त्रिमूर्त्युत्तीर्णस्य साम्बशिवस्य न कुतोपि जननं न तामसत्वं न पाशुपत्यवरणबाणासुरयुद्धादिकम्। किन्तु संहाररुद्रतदंशरूपाणां श्रीसाम्बशिव विभूतिविशेषाणामेव। तेषामपि न नियमेन ब्रह्मणो नारायणान्निकर्षः। किन्तु क्वचित् ब्रह्मणः क्वचिन्नारायणस्य क्वचित्तेषामिति कल्पादि भेदेनाव्यवस्थितः। तदेतच्छिवपुराणे वायुसंहितायाम्। "त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात्" इत्युपक्रम्य स्पष्टमुक्तम्। "तपसा तोषयित्वा तं पितरञ्च महेश्वरम्। ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरे सृजत्। कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णूजगन्मयः। विष्णुश्च भगवांस्तद्वद् ब्रह्माणमसृजत्पुनः। नारायणं पुनर्ब्रह्मा ब्रह्माणञ्च पुनर्भवः। एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः। परस्परस्माज्जायन्ते परस्परजयैषिणः। तत्तत्कल्पान्तवृत्तान्तमधिकृत्यमहर्षिभिः। प्रभावः कथ्यते तेषां परस्परसमुद्भव" इति। "तत्तत्कल्पान्तवृत्तान्तमधिकृत्यमहर्षिभिः। तानि तानि प्रणीतानि विद्वांस्तु च न मुह्यति। परम्परस्त्वयन्नेति संरम्भाभिनिवेशिनः। यातुधाना भवन्त्येव पिशाचाश्च न संशयः"। इति च कर्म्मविपाकशास्त्रेपि परमेश्वरांशभूतानान्तेषां भेदसाधने दोष उक्तः। "यो ब्रह्म-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विष्णुरुद्राणां भेदमुत्तमभावतः । साधयेद्दुदरव्याधियुक्तो भवति-मानव" इति ॥ १६ ॥

एवं पारमार्थिकं परिहारमुक्त्वा साक्षात्साम्बशिवस्यैव ब्रह्मणो नारायणस्य च ललाटाज्जननमभ्युपेत्य तस्य श्लोकत्रयेण दोषत्वाभावमाह ॥

देवत्वमेव निखिलाद्य विधातृविष्णो
राविर्बभूविथ ततस्तव को निकर्षः ।
नासापुटान्नहि विधेर्न्न च तस्यपौत्रा
ज्जातोसि विष्णुरिव नापि मनुष्यमात्रात् १७

नास्त्येव ते पुरुषवीर्यकणानुषक्तिः
नस्त्रैणगर्भवसतिर्न्नच योनिजत्वम् ।
व्यक्तः परं क्वच न ते शिव यद्यवद्य
मेतैः कियत् खलु विभो नभवेन्मुरारेः॥१८॥

अभ्यर्थनोपगमपूर्वमकर्म्मवश्यम्
आवेदयद्भिरवतारमिमं समस्तम् ।
पौराणिकैः प्रकटिता परिहाररीतिः
विश्वेश हन्त विदिताऽविदिता खलनाम् १९

ब्रह्मणो नारायणस्य चाविमुक्तोपासनस्थलत्वेनाच परिशुद्धा-ललाटदेशादभिव्यक्तिः शिवस्य । न तु नारायणस्येव ब्रह्मणो नासापुटात्तस्य पौत्रात्काश्यपान्मनुष्यमात्राद्वा जननम् । शिवस्य प्रादुर्भावे क्वचिदपि नारायणस्येव न पुरुषवीर्यप्रवेशः । नस्त्री गर्भवासः न च तद्योनिप्रभवत्वम् । क्वचित्क्वचिदभिव्यक्तिमात्रे ण

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वद्यमापद्येत तदोक्तैः षड्भिर्हेतुभिर्न्नारायणस्य कियदवद्यं नापद्येत। यतः शिवस्याभिव्यक्तिमात्रं जननदोषत्वेनोद्घाटयद्भिर्बालिशैर्नारायणस्यैव तदतितरामुद्घाटितं स्यात्। रामकृष्णावतारयोर्म्मूलभूतस्यापि विष्णोः कर्म्म निबद्धधर्म्मभूतस्य शोकमोहभीत्यादिपारवश्यस्य तत्र तत्र प्रपञ्चिततया तेनापि तदुपोद्बलितं स्यात्। यदि मन्येरन् ब्रह्माद्यभ्यर्थितस्य विष्णोरकर्म्मपारवश्योऽयं सर्वो व्यवहारः स्वेच्छापरिगृहीतमानुषभावादिनाऽनर्थशोकमोहाद्यभिनय इति। इत्थं कुतोऽवगम्यते। पुराणवचनेभ्य इति चेत्तेभ्य एव ननु शिवस्यापि तत्राभिव्यक्तिर्ब्रह्मादिप्रार्थितस्यैव स्वेच्छाधीनाऽवगम्यते। तत्र बालिशैः किञ्चिदविदितमिव व्यवह्रियत इति नेदं विद्वत्कृत्यमिति भावः। अत्रादिवराहरूपस्य विष्णोर्ब्रह्मनासापुटाज्जनिर्भागवते दर्शिता। इत्यभिध्यायतो नासाविवरात्सहसाऽनघ॥ वराहपोतो निरगादङ्गुष्ठपरिमाणकः। तस्याभिपश्यतः खस्थः क्षणेन किल भारत। गजमात्रः प्रववृधे तदद्भुतमभून्महदिति। वारितो यत्र भूर्निमग्ना ततः प्रलयाब्धिजलादित्यर्थः। विष्णोः पुरुषवीर्यानुप्रवेशस्तत्स्त्रीगर्भवासस्तद्योनिप्रभवत्वञ्च भागवत एव वामनावतारे दर्शितः। अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः। उपाधावत्पतिम्भक्त्या परयाकृतकृत्यवत्। स वै समाधियोगेन काश्यपस्तदबुध्यत। प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः। सोदित्यां वीर्यमाधत्त तपसा चिरसम्भृतम्। समाहितमना राजन् दारुण्यग्निमिवानलः। अदित्याधिष्ठितं गर्भं भगवन्तं सनातनम्। हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः। इत्थं विरिञ्चिस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम्। चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः। इति ब्रह्मस्तुतत्वोक्त्या कंचित्कालं मनुष्यादिवद्गर्भे वसतिः सूचिता वामनपुराणे तु स्पष्टमेवोक्ता। तत्र



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

हि विष्णुः क्व वर्तत इति सर्वेषु लोकेष्वप्यन्विष्य क्वाप्यदृष्ट्वा मेरोरधस्तात्क्वचिद्देवमातरमदितिन्तेजोधिकां दृष्ट्वा नूनमस्याः कुक्षौ वर्त्तत इति तत्कुक्षिं प्रविष्टेन प्रह्लादेन तत्र दृष्टो हरिरितिप्रतिपादितम्। तान्दृष्ट्वा देवजननीं सर्वतेजोधिकाम्मुने । विवेश दानवपतिरन्वेष्टुम्मधुसूदनम्। स दृष्टवान् जगन्नाथम्माधवं वामनाकृतिम्। सर्वभूतवरंदेवं देवमातुरथोदरे"। इति शिवस्य ब्रह्मनारायणयोर्ललाटादभिव्यक्तिस्स्वेच्छाधीनेति महाभारतकूर्मपुराणयो र्दर्शितम् । "अनादिनिधनो देवश्चै तन्यादिसमन्वितः ज्ञानानि च वशे यस्य तारकादीन्यशेषतः। अणिमादिगुणोपेत मैश्वर्यं न च कृत्रिमम्। सहि पूर्वाधिको राजंस्तोषितस्तपसा विधेः। ललाटादनियोज्योपि पुत्रत्वे न प्रकल्पित" इति। गर्भवासादिकन्तु शिवस्य क्वचिदपि नास्तीति स्कान्दपुराणसनत्कुमारसंहितायामुक्तम् । स्रष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुरिति। "अहन्तु भवतो वक्त्रात्कल्पान्ते घोररूपधृक् । शूलपाणि र्भविष्यामि क्रोधजस्तवपुत्रक" इति। "एवं निर्दिष्टः परमेशेन महेशो नीललोहितः। पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोनुजः। तस्य हृत्कमलस्थस्य नियोगादङ्गजो विभुः । ललाटन्तस्य निर्भिद्य प्रादुरासीन्महेश्वर" इत्यादि शैवलैङ्गादि वचनमपि द्रष्टव्यम्। "भूतानामधिपो रुद्रो मृडस्तन्निचरो वृषा। स्वेच्छयापि न यस्याहुर्भूतसंसारसंग्रहम्। पुरात्रेरपि यत्सत्याः करादेवाभवत्सुतः"। स्वप्नांशेनापि गर्भस्य दुर्वासत्वमुदाहरन्निति । रामकृष्णावतारयोरिन्द्र जित्साल्वादियुद्धेषु तदीयशरैः क्षतिर्बन्धो मूर्च्छेत्यादिकं रामायणभारतादिप्रसिद्धम्। अवसाने देहत्यजनञ्च। "ततो गोप्रतरंगच्छे त्सरय्वास्तीर्थमुत्तमम्। यत्र रामो गतस्स्वर्गं सभृत्यबलवाहनः। देहन्त्यक्त्वा दिवं यातस्तस्य तीर्थस्य वैभवात्" इत्येवं रूपंभारतादिवचनप्रसिद्धम्। शुक्लशोणितस-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

स्थव: प्राकृतशरीरलिङ्गं निर्दोषस्य त्वयं विष्णुर्मानुषेषूपपद्यते चिन्ताश्रमव्रणाज्ञानदुःखयुग्रूप्यते कथम् । एष मे संशयो ब्रह्मन् हृदि शल्य इवार्पितः । अनिर्वार्योपरैर्मत्यैंस्सूक्ति शक्त्या तमुद्धरे"त्यादि प्रश्नैर्ब्रह्माण्ड पुराणादिषु नारदाद्यैः शंकितः । "स्त्री पुम्बलानुबङ्गात्मदेहो ऽस्य न विजायते । किन्तु निर्दोषचैतन्य सुखां नित्यां स्वकान्तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्नचापरा । तथाप्यसुरमोहार्थं परेषाञ्च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसत्वगु"ः । क्व व्रणादिः क्वचाज्ञानं स्वतंत्रे ऽचिन्त्यसद्गुणे । दौर्लभ्यायैव मोक्षस्य दर्शयेन्नान्यतो हरिः । कृष्णोप्यत्यन्त देहोपि त्यक्त देहस्य देहवत् । लोकानान्दर्शयामास स्वरूपसदृशाकृतिं । इत्यादि वचनजातं प्रदृश्य यत्नेन परिहरणीयः । शिवस्य देहत्यागः क्वचिदपि न श्रुतः । किरातरूपधारिण्यपि तस्मिन्नर्जुनबाणैर्बाधानाभूदित्युक्तम् । भारते । "ततो र्जुनश्शरैर्वर्षं किराते समवाकिरत् । तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः । मुहूर्त्तं शरवर्षन्तु प्रतिगृह्य पिनाकधृक् । अक्षतेन शरीरेण तस्थौ गिरिरिवापरः । सदृष्ट्वा बाणवर्षन्तु मोघीभूतं धनञ्जयः । परमं विस्मयञ्चक्रे साधुसाध्विति चाब्रवीदिति" । एवं शिवस्य हरिविरिञ्चललाटाद्याविर्भावमात्रस्य कर्माधीनत्वपरिहारार्थमैच्छिकत्वमुपपादनीयम् । विष्णोस्तु वीर्यानुप्रवेशगर्भवासयोस्तथात्वम् । "शुक्लेन जनिरन्येषां हरेस्तुतनुनैवतु । नित्योदितज्ञानतनोः कुतस्स्याच्छुक्लतोजनिः । नावतारेष्वपि हरेर्देहस्य शुक्लादिसंभवः । तथापि शुक्लसंस्थ स्मात्वदेहं प्रविश्य च । विनापि शुक्लन्तत्रै व केवलं जातरूपकः । उदेति भगवान्विष्णुर्मायो लोकं विमोहयन्नि"त्यादिकं गारुडवाराहादि वचनजातं प्रदर्श्य यत्नेनोपपादनीयम् । इत्थं च जात इत्येवं कश्चिद्गीरुः प्रपद्यते । रुद्रयत्ते दक्षिणम्मुखं तेन मां

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पाहिनित्यम् इति । श्वेताश्वतरोपनिषन्मन्त्रेण "अजातमिम-मेवैकम्मत्वा जन्मनिभीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थन्दक्षिण-म्मुखम्" । इति । शिवपुराणोपबृंहितेन ॥ ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते न कारणमित्याद्यथर्वशिखावाक्येन च प्रागुदाहृत-शिवपुराणवचनोपबृंहितेन शिव एक एव जनिरहितः । अन्ये सर्वे जनिमन्त इत्यवधारितमपि तस्य जनिमभ्युपेत्य जनेर्दोष-त्वाभावः समर्थितः ॥ १९ ॥

अथ तामसत्वं संहाररुद्रधर्म्ममपि परमशिव धर्म्ममभ्युपेत्य तस्य दोषत्वाभावं समर्थयति ।

कालाग्निरुद्रवपुषा भगवन् भवार्त्तिम्
कल्पावसानसमयेषु हरन् जनानाम् ।
गृह्णासि शङ्कर तमः करुणैकमूर्त्ति
श्शस्त्रं नृणां व्रणरुजं शमयन्निवत्वम् ॥२०॥

किमिदं तामसत्वं दोषत्वेनापाद्यते । किन्तमोगुणमुपकरणं कृत्वा सकलं जगत्संहरतीति नैष्ठ्ये व्यापादकतया तमोगुणोपक-रणत्वं दोषत्वेनापाद्यते । उत प्राकृतजनवत्तदभिभूतत्वम् । आद्यपक्षनिरासार्थोऽयं श्लोकः । संसारमहाध्वचिरगतागताति श्रान्तान् प्राणिनः कंचित्कालम्महासुषुप्त्यापादनेन विश्रान्तिं प्रापयितुं सकलं जगत्संजिहीर्षुर्म्महादेवस्तत्संहारोपकरणतया तमो गृह्णाति । यथा चिरकालं व्रणरुजार्त्यानिद्राहाररहिता-नतिदुःखमनुभवतो मनुष्यान् व्रणरुजापनयनेन सुखयितुं तात्कालिकं किंचिद्दुःखकरमपि व्रणच्छेदंकरिष्यन् व्रणवैद्यस्त-दुपकरणतया शस्त्रं गृह्णाति ॥ नच शस्त्रग्रहणं व्रणच्छेदनस्य तस्य नैष्ठ्ये व्यापादकम् । किन्त्वयं प्राणी रक्षणीय इति परम-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

दयालुत्वज्ञापकमेव । तदुक्तं शिवपुराणे । "निदानज्ञस्य भिषजो रुग्णे हिंसां प्रयुंजतः । न किञ्चिदपि नैर्घृण्यं घृणैवात्र प्रयोजिका" इति ॥ २० ॥

अथ द्वितीयं विकल्पं निरस्यति ।

निद्रालुता न तव शंकर शक्यशङ्का
क्रौर्यं किमप्यनुचिते विषये न दृष्टम् ।
नान्योऽपि कश्चन गुणस्तमसोविकार
श्शंक्या कथन्तव बुधैस्तमसाभिभूतिः ॥२१॥

तमसाभिभूतस्य हि निद्रापारवश्यं भवति न तदिह शक्यशंकं । जागरेप्यनुचितविषये तस्य क्रौर्यं भवति तदपि शिवस्य क्वचिदपि न दृष्टम् । ननु त्रिपुरजलन्धरादिवधमूलस्य क्रौर्यस्योचितविषयत्वे पि ब्रह्मपंचमशिरोलवनदक्षाध्वरध्वंसन देवता निग्रहमूलं क्रौर्यमनुचितविषयमिति चेत् । उच्यते । निग्रहस्तावद्द्विविधः । अनुग्रहोद्देश्यकस्तदनुद्देश्यकश्च । आद्योपि त्रिविधः । अनुग्राह्यानुग्रहोद्देश्यकः । बह्वितरानुग्रहोद्देश्यक उभयानुग्रहोद्देश्यकश्च । तत्राद्यः सदाचारानुवर्त्तनाद्यर्थं पुत्र शिष्यादिनिग्रहस्तु गुण एव । द्वितीयो बह्वितरानुग्रहोद्देश्यकश्चेति न दोषः । "एकस्मिन्यत्र निधनं प्रापिते दुष्टचारिणि । बहूनां भवति क्षेमन्तत्र पुण्यप्रदो वध" इति वचनात् । स यथा मृगयया व्याघ्रादिवधः । चोरवध उभयानुग्रहार्थः । "राजभिर्धृतदण्डास्तु कृत्वापापानि मानवाः । निर्मला स्वर्गमायान्ति सन्त स्सुकृतिनो यथा" इति वचनात् । एवं निर्दोषाणामप्यध्ये ऽन्यतम एव शिवकृत स्सर्वोपि निग्रहः । अतः पुत्रादि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

निग्रहवत् ब्रह्मादि निग्रहोप्युचित एव । तदुक्तं शिवपुराणे ये पुनर्निग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः । तेपिलोकहिताये व कृता श्रीकण्ठमूर्त्तिना । अखण्डस्याधिपत्यं हि श्रीकण्ठस्य न संशयः । श्रीकण्ठाख्यां शिवो मूर्त्तिं क्रीडार्थमधितिष्ठति । स एष एव देवादिनिग्रहीतायथोचितम् । ततस्ते पि विपाप्मानः प्रजाश्च विगतज्वराः । निग्रहोपि स्वरूपेण विदुषां न जुगुप्सितः । अत एव हि दण्ड्ये षु दण्डोराज्ञां प्रशस्यते । प्रसिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः । न स चेदीशतांकुर्याज्जगतः कथमीश्वरः । हितेसदा निषण्णानामीश्वर स्तत्रान्निदर्शनम् । स कथन्दूष्यते सद्भिरसतामेव निग्रहात् । सर्वोपि निग्रहोलोके न च विद्वेषपूर्वकः । न हि द्वेष्टिपितापुत्रं योनिगृह्यापि शिक्षयेत्" इति । एवन्निद्राक्रौर्ययोरभावेपि मोहादि विकारो यदि दृश्ये त तदाकल्प्ये तापितमोभिभूतत्वं अतस्तत्र तस्याप्यभावादिति भावः । कार्यं दर्शनेन तद- भिभूतत्वं कल्प्यते चेत्तर्हिविष्णोरेव तत्कल्प्ये त । तस्य प्रायेणनिद्राबलिबन्ध भृगुपत्नीताटकावालिवधादि विविधासुरदेवकारितचित्रवधादिषुचानुचितविषये क्रौर्यं । रामकृष्णावतारयोः शोकमोहादिविकारश्च दृष्टः तत्र निद्रापारवश्यं तावद्भीष्मेण सभापर्वण्युक्तम् । आदिदेवः पुराणात्मा निद्रावशमुपागतः । शेते स्मसततं विष्णुर्मोहयं जगदव्यय इति । तच्चतामसत्वलिंगमिति नरसिंहं प्रतिशरभेणोक्तमिति स्कान्दे प्रतिपादितम् । "यत्तामसकलालेशगृहीतस्त्वं पयोनिधौ । निद्रापरवशः शेतेकथन्तत् सात्विको भवान्" इति । भारतयुद्धे श्रीकृष्णस्य तत्तद्वधोपायाच्छद्मव्यापाररूपाः शल्यपर्वणिदुर्योधनेन परिगणिताः । तत्रहि । भगवन्तं वासुदेवं प्रत्येवाति क्रुद्धस्य दुर्योधनस्य मानि वचना-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

नि। "कं सदासस्य दायादनते लज्जास्त्यनेन वै। अधर्मेणगदा-युद्धे यदहं विनिपादितः। ऊरूभिन्धीति भीमस्य श्रुतिर्मिथ्या यदिच्छसि। कथन्नज्ञातमेतन्मे यदर्जुनमवो चथाः। पातयित्वा महीपालानृजुयुद्धान्सहस्रशः। जिह्मैरुपायैर्निपुणैर्नते लज्जान ते घृणा। अहन्यहनिशूराणां कुर्वाणः कदनंमहत्। शिखंडि नंपुरस्कृत्य पातितस्व पितामहः। अश्वत्थामसनामानं हत्वा नागं सुदुर्म्मते। आचार्यस्त्याजितः शस्त्रं किन्तन्नविदितम्मम। सचानेन नृशंसेन धृष्टद्युम्नेनवीर्यवान्। हन्यमानस्त्वया दृष्टो न चैनं समवारयः। वधार्थंपाण्डुपुत्रस्य योजितां शक्तिमेव च। घटोत्कचेव्यसर्जेथाः कस्त्वत्तः पापकृत्तमः॥ छिन्न-बाहुः प्रायगतः तथाभूरिश्रवारणे। ततस्ते नैव निहतः शैने-येनदुरात्मना। कुर्वाणश्चोत्तमं कर्मकर्णः पार्थं जिघांसया। व्यस-नेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै। पुनश्च पतिते चक्रे व्यसना-र्तः पराजितः। पातितस्वरणेकर्णश्चक्रव्यग्रोग्रणीर्नृणाम्। यदिमां चैव कर्णञ्च भीष्म द्रोणौ च संयुगे। ऋजुना प्रतियुध्येथानते स्याद्विजयोध्रुवम्। त्वयापुनरनार्येण जिह्ममार्गेण पार्थिवाः। स्वधर्ममनुतिष्ठन्तोवयञ्चान्ये निपातिताः। त्वयामाया विना-शिनीमायामर्कप्रमोषणीम्। कृत्वा हतः सिन्धुपतिः किन्तन्न विदितं ममेति। एवमुक्त्वादुर्योधनेन। न मे विषादोभीमेन पादेन शिर आहतम्। काकावाकंकगृध्रावानिधास्यन्ति पदं चणात्" इति। भीमसेनस्याप्यपहासे कृते दिवि देवताभिः कृतां दुर्योधनस्य प्रशंसां तस्योपरि पुष्पवृष्ट्यादि कञ्च दृष्ट्वा तथाविधानुचितशाठ्यादिकरणनिमित्तं व्रीलाचिन्तादिकमप्यु क्तम्। अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः। दुर्योधनस्य पू-जां च कृत्वा व्रीलामुपागमन्॥ हतांश्चा धर्मतश्श्रुत्वा शोकार्ता

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्च क्रुश्च नृपाः। भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च। तांस्तु चिन्तापरान् दृष्ट्वा पाण्डवान् दीन चेतसः। प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः" इति आश्वमेधिके पि: उदंकोमुनिरायया विति प्रस्तुत्य तस्य श्रीकृष्णं प्रति शाठ्येन दुर्योधनादयो निहता इति कोपे न वर्णितम्। "आयांतमेत्य गोविन्दं समन्युर्मुनिरब्रवित्। सर्वांस्त्वं धार्त्तराष्ट्रादी न्दीनान् शाठ्ये न नाशयन्। अतश्शपेयं त्वां कृष्णेत्युक्तस्तं हरिराह स इति। एवं च नारायणे तमः कार्यतया शंक्यमानं निद्रादिकमित्यं परिहरणीयं। तस्य निद्रा नयनेनिमील्य स्वात्मतत्वानुचिन्तन रूपा। शोक मोहादेरभिनयमात्रम्। अनुचित विषय क्रौर्यं सर्वत्र त्तद्वध्यदुष्कर्म विशेषायत्तमिति। इत्थमेव तत्र तत्र पुराणेषु रामायणभारत योश्च परिहारःकृतो दृश्यते। तदेवं यथा नारायणस्य तमोभिभूतत्व शंकायन्नतः परिहरणी यासीन्नैवं शिवे॥ यद्यपि शंका प्रसरं लभते। तदे तत्सर्वं व्यतिरेकमुद्रयानेन श्लोकेन दर्शितम्॥ २१॥

ननु सात्विकत्व प्रसिद्धेस्तद्विरोधितामसत्वं शंकास्पदमपि सुपरिहरमिति चेत्तदपि शिव स्यैवसुप्रसिद्धमित्याह॥

सत्वप्रवर्त्तनकरस्त्वमसिप्रतीतः
सत्वन्तनुश्च तव सत्वमयश्च यत्वम्।
एतावदद्रितनयाधिप सात्विकत्वम्
किंसम्भवेत्क च न तामसताविरोधि॥२२॥

"महान् प्रभु र्वै पुरुष स्सत्वस्यै षप्रव र्त्त क इतिश्वे ताश्वतरोपनिषद्याम्नायते। शिवस्य सत्वं विग्रहः। तमस्य कार्यकरणोपाधिः।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विष्णोस्तु विपरीतमिति सूतसंहितायामुक्तम्। "यस्य मायागतं सत्वं शरीरं स्यात्तमोगुणः॥ संहाराय त्रिमूर्तीनां सरुद्र स्यान्नचापरः। तथायस्य तम स्साचास्छरीरं सात्विको गुणः। पालनाय त्रिमूर्तीनां सविष्णु स्स्यान्नचापर" इति। सत्वन्देवा हरादय इति वासिष्ठरामायणे देवतिर्यङ्मनुष्यादिषु सत्वादिगुणविभागे शिवस्य प्राधान्ये सत्वमयत्वमुक्तम्। एतावात्सात्विकत्व शिवाद-न्यत्र क्वापि न सम्भवतिविष्णोर्हि पालनो पाधिकमात्रेण सत्वपरिग्रहः। सतुसर्वत्रसत्वप्रवर्तन स्वतन्त्रेण प्रवर्त्तितस्य सत्वस्यपालनसामर्थ्य सिद्धये ससुन्मेषेणापि सम्भवति॥ २२॥

ननु तामसत्वविरोधि सात्विक त्वं शिवस्यास्ति चेत्कथमय-मुग्रो भीमश्च व्यपदिश्यत इत्याशंकायामाह।

उग्रस्त्वमुत्तरतया जगतस्समस्तात्
भूया समुग्र इति तत्परता हि दृष्टा।
भीमोसिशंकरनियन्त्रतयाखिलानाम्
वेदः प्रणौतियत एव महद्भयंत्वाम्॥ २३॥

उग्रशब्द उत्तरवाच्यप्यस्ति। उग्रोस्युग्रोहंसजातेषु भूयास मित्युग्रत्वस्याशास्यत्व श्रवणात्।उत्पूर्वान्नमेरुग्नच्छतीत्युत्तरोभव-तीत्यस्मिन्नर्थे ऋज्रेन्द्रोग्रवज्रेत्यौणादिकसूत्रेण रक प्रत्ययान्नि-पातितोयमुग्रशब्दः। शिवस्य सर्वोत्तरत्ववाची न क्रौर्यवाचो भी-मशब्दस्तु भयङ्करत्ववाच्येव तस्योत्कर्षमावहति। यदिदं किं च जगत्सर्वं प्राण एजति निःसृतं। महद्भयं वज्रमुद्यतमय एत-द्विदुरमृतास्ते भवन्ति" इति। मन्त्रतस्सर्वजगद्भयहेतुत्वस्य सकलनियन्त्रपरब्रह्मधर्मतावगमात्। अतोस्य सत्वस्यप्रवर्त्तक-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्वादिलक्षणं सात्विकत्वं कियन्तमपि तमोगन्धं न सहत इति भावः ॥ २३ ॥

सत्वप्रवर्तकत्वलक्षणं सात्विकत्वं हेत्वन्तरेणाप्युपपादयति ॥

संख्यातिशायिगुणसत्वनिधिस्त्वमेव
ज्ञानं सुखञ्च यदि सत्वगुणादवाप्यम् ।
जानीम हे तदुभयन्त्वदधीनमीश
जाबालसूनृतमुखैर्ननु जन्मभाजाम् ॥२४॥

जाबालोपनिषदि । रुद्रस्तारकं ब्रह्मव्याचष्टे येनासावमृती भूत्वामोक्षी भवतीत्यविमुक्तोपासनया प्रसन्नस्य शिवस्योपासनावसानकाले संसारतारकप्रणवार्थभूतपरब्रह्मविद्याप्रदत्वं श्रूयते । तस्याश्च विद्यायाः फलं जीवन्मुक्तिरूपसुखपरममुक्तिसुखरूपञ्च क्रमप्राप्य ममृतोभवनमोक्षी भवनशब्दाभ्यामभिधीयते । जीवन्मुक्तिसुखञ्च निरतिशयानन्दरूपब्रह्मावगत्या तत्प्रयुक्ततुच्छविषयसुखवैतृष्ण्येन चोज्ञवमुक्तिसुखकल्पमेव । यदाहुः । यच्चकामसुखं लोके यच्चदिव्यम्महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतष्षोडशींकलामित्यादि । इदमेव शिवस्य ज्ञानप्रदत्वम् । "सनोदेवश्शुभया स्मृत्यास्संयुनक्तु" इति तैत्तिरीयोपनिषदि । "सनोबुध्याशुभयासंयुनक्तु" इति । श्वेताश्वतरोपनिषदि च । तत्प्र । यंनाम्ना न द्वारा प्रति पाद्यते । तत्र शुभत्वं जीवन्मुक्तिपरमुक्तिसुखप्रदत्वमेवजाबालश्रुत्यैकार्थ्यात् । एवं ज्ञान सुखे प्रयच्छता शिवेनानुग्राह्यस्य सत्वोद्रेकः कार्यः । सत्वात्सुखञ्च ज्ञानञ्चेति तयोस्सत्वाधीनत्वस्मृतेः । अतश्शिवस्यैव ज्ञानसुखप्रदत्वम् । अन्ये सर्वे तत्प्रवर्तनीयतत्तत्कार्योपयोगिसुखोद्रेकविशेषभाज इति युक्तमेव ॥ २४ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अथ शिवस्यज्ञान प्रदत्वे हेत्वन्तराण्याह ॥

विद्याप्रदंवरद विश्वसिमः कमन्यम्
विद्याधिपेभवति विश्वगुरौ प्रतीते ।
सर्वज्ञनामनि स मुन्मिषदिन्दुचूडे
सव्यार्धविग्रहसमाकलितात्मविद्ये ॥ २५ ॥

"ईशानस्सर्व विद्यानाम्" इति मन्त्रे शिवस्य सर्व विद्याधिपतित्वं प्रसिद्धम् । स्वतस्सिद्धमेव सर्वविज्ञानानान्तदधीनत्वम् । ज्ञानानि च वशेयस्य तारकादीन्यशेषत इति महाभारतेप्युक्तम् । ब्रम्हाण्डपुराणे मध्यभागे इलोपाख्याने शिवस्य संहारकाल एव तदुपकरणत्वेन तमोगुणग्रहणम् । स्वतस्सर्वदा विशुद्धज्ञानमयत्वं च वर्णितम् । "सदसद्भाव युक्ताय प्रलयेतामसात्मने । विशुद्धज्ञानतत्वाय तुभ्यं रुद्रात्मने नम" इति । विश्वगुरुत्वं शिवस्य शिवपुराणे प्रतिपादितम् । "प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा स एवादौ कालावच्छेदवर्त्तिनाम् । कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः । सर्वेषामेव सर्वेश: कालावच्छेदवर्जित:" । इति । अमुमेवार्थंपतञ्जलिरपि योगशास्त्रे सूचयामास । "तत्क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति प्रस्तुत्यसूत्रं सपूर्वेषामपिगुरुः कालेनानवच्छेदादिति । किंचऋषीणामपि सार्वज्ञसमाने शिवस्य विशिष्यसर्वज्ञ इति नाम तस्य विश्वगुरुत्वोपयोगिनित्यसिद्धनिरतिशय सार्वज्ञसद्भाव प्रयुक्तम् । अत एव शिवपुरापुराणेपि शिवस्यादि गुरुत्वोपपादनार्थं तद्वर्णनात्प्राक् पठ्यते । "लोके सातिशयत्वेन ज्ञानैश्वर्यं विलोकितम् । शिवेनातिशयत्वेन स्थितं प्राहुर्मनीषिण" इति । पातञ्जलेपि सपूर्वेषामपि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

गुरुरिति सूत्रात्प्राचीनं सूत्रन्तस्य निरतिशयं सार्वज्ञबीजमिति। शिवस्य चन्द्रशेखरत्वं प्रसिद्धम् । स चन्द्रः सकलज्ञानमय इति शिवशास्त्रेषु प्रसिद्धम् । "ज्ञानचन्द्रकलाचूडन्दशदिग् बाहुमण्डलम् । त्रैगुण्यादिमयैर्भान्तन्दिव्यैर्दशभिरायुधैः" इति। यथा अन्नसत्रप्रवृत्ताः क्षुधितानामन्नार्थिनामयमन्नदातेत्य-भिज्ञायोपसर्पणेनानुग्रहार्थं स्व प्रासादशिखरेष्वन्नध्वजं बध्नाति एवं शिवोपि स्वयं ज्ञानप्रद इति पत्यायनेन लोकानुग्रहार्थं ज्ञानमयीञ्चन्द्रकलां शिरसि दधारेतिज्ञानप्रदत्वं युक्तम्। अपि च भगवत्युमादेवी ब्रह्मविद्या प्रदायिनीति श्रुति पुराणप्रसिद्धा। तलवकारिणामुपनिषदि तस्याश्शक्रादीन् प्रतिश्वेताश्वतरा-णामुपनिषदि महर्षीन् प्रति च परब्रह्म विद्योपदेष्टृत्वमा-म्नातम् । कूर्मपुराणे चेश्वरगीतासुयोगाध्याये तस्यास्सकललो-कानुग्रहैक रसिकशिवनियोगात् ब्रह्मविद्याप्रदत्वमुक्तम् । तत्रहि ब्रह्मविष्णुरुद्रादीनां शिवनियोगेन सृष्टिपालनसंहारादि कर्तृत्वप्रतिपादनप्रकरणे शिववचनम्। "पार्वतीपरमादेवी सर्व विद्या प्रदायिनी । यभिख्याता विशेषेणसापि मद्वचनानुग" इति। एवम्भूताभगव त्युमायद्विग्रहैकदेशरूपातस्य ज्ञान प्रदत्वं कैमुतिकन्यायसिद्धम् । अतश्शिवमपहायमुक्तिहेतुज्ञान प्रदत्व-मन्यस्य कल्पयितुमशक्यमित्यर्थः ॥ २५ ॥

सुखप्रदत्वमपिहेत्वन्तरैरुपपादयति श्लोकद्वयेन ।

शम्भुश्श्रुतोसि ननु तृप्तिविरागशाली
वैराग्यचिन्हभरितश्चमहेश्वरत्वम् ।
तंत्वामपारसुखसागरमन्तरेण
कस्मात्सुखम्भवितुमर्हति देहभाजाम् ॥२६॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यज्जीवरत्नमखिलागमलाळनीयम्
ये च त्रिनेत्रमृडशंकरनामधेये ।
एतैरपिस्फुटमनन्यसमाश्रयन्ते
विख्याप्यते सकल जीवसुखप्रदत्वम् २७॥

शिवस्य सकलजीवसुखप्रदत्वे तस्य निरतिशयसुखास्पदत्वं हेतुं, कृत्वा तस्य हेतोः समर्थनार्थं हेत्वन्तरमाद्यश्लोकेनोच्यते । शम्भवतीति शम्भुः कर्त्र र्थेडु प्रत्ययः। सर्वेषामप्यात्मनां सुखात्मत्वे पि विशिष्येयं व्यपदेशो निरतिशयसुखात्मत्वाभिप्रायः। अत एव तस्य नित्यतृप्ति नित्यत्वविषयसुखवैलक्षण्यं शिवशास्त्रेषु प्रसिद्धमाम्नायते । "सर्वज्ञतातृप्तिरनादिबोधस्वतन्त्रतानित्यमलुप्तशक्तिः। अनन्तशक्तिश्चविभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य। ज्ञानं विरागतैश्वर्यं तपस्सत्यं क्षमाधृतिः। स्रष्टृत्वमात्मसम्बोधोह्यधिष्ठातृत्वमेवच। अव्ययानिदशैतानि नित्यन्तिष्ठन्तिशङ्करे" इति। "ज्ञानमप्रतिमं यस्य वैराग्यञ्च जगत्पतेः। ऐश्वर्यञ्चैव धर्मश्च सहसिद्धं चतुष्टयम् इति ब्रह्मणश्शुतमपि वैराग्यं हिरण्यगर्भं पश्यति जायमानम् इति जायमानावस्थायामेव शिवकटाक्षानुगृहीतस्य सहोत्पन्नमित्येव नतुनित्यमत एव सहसिद्धमित्युक्तम्। एवं स्वस्य निरतिशय सुखास्पदत्वेन तुच्छविषय सुखवैलक्षण्यं ज्ञापयितुमेव विषयभोगत्वं पटसूडादरणीयानि वस्त्रमाल्याभरण चन्दनाद्यनुलेपनानि विहायगजचर्मभुजगास्थिभस्मानि तत्स्थानेषु परिगृहीतानि। तदेतद्भागवते काश्यपवचनेन स्फुटीकृतम्। हसन्ति यस्या चरितंहि दुर्भगास्स्वात्मन्रतस्याविदुषस्समीहितम्। यैर्वस्त्रमाल्याभरणानुलेपनैश्श्वभोजनं स्वात्मतयोपलालि-

घ

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तमिति । स्वात्मनिरतस्य स्वात्मानन्दामृतसागरनिमग्नस्य स मोहितमप्यविदुषोनिरतिशय स्वात्मानन्दनित्यास्वाद प्रयुक्त-विषय सुखवैतृष्ण्यास्फुटीकरणाभिप्राय मजानाना: । स्वभोजनं पतनानन्तरं स्वभिर्भक्ष्यमाणं शरीरम् । न च नश्वस्य निरतिशयसुखत्वमन्येभ्य: सुखप्रदत्वे कथंहेतुर्बहुधनस्यापि कदर्यस्य धन-दानादर्शनात्धनसन्तानादि रहितस्याप्यनुग्रहसमर्थस्य यो-गिनस्तद्दर्शनाच्चेति शङ्कनीयम् । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यनुसारेण निरतिशयसुखास्पदतया शिवस्यैव सुखमहासमुद्रक्षुद्रकणिकायमान हैरण्यगर्भान्तसु-खप्रदत्व प्रसिद्धे: । द्वितीयश्लोकेन शिवस्य सकलजीवसुखप्रदत्व एव साक्षाद्धेतव उच्यन्ते । जीवरत्नं शिव इतिनाम । "अथ हैनं ब्रह्मचारिणऊचु: । किं जप्येनामृतत्वं नो ब्रूहीति सहोवाच याज्ञवल्क्य: । शतरुद्रीयेणेति । एतानिहवा अमृतस्य नामधे-यानि एतैर्हवा अमृतो भवतीति जाबालोपनिषदि श्रीरुद्राम्ना-तानि नित्यमुक्तस्य शिवस्य नामधेयानिअमृतत्वसाधनान्युक्ता-नि । तेषाम्मध्ये शिवनामात्युत्कृष्टम् । "विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ । तत्र पञ्चाक्षरीतस्यां शिव इत्यक्षरद्व-यम्"इति । शिवागमरहस्यविदां वचनात् । "यद्व्यक्षरन्नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशुहन्तितदिति । भागवतेपि । तत्प्रशंसनात् । अतस्तज्जीवरत्नमिति व्यवहरन्ति । शिवागमवि-द: । तच्छिवं करत्ववाचि । "शिवएकोध्येय शिवंकर" इत्यथ र्वशिखोपनिषदि । तस्य तथा व्याख्यातत्वात्तद्व्याख्यानार्थं हि तत्र शिवंकरपदं सर्वैश्वर्यसम्पन्नःसर्वेश्वर इति पूर्ववाक्येपि सर्वे-श्वरनाम्नो यौगिकतया व्याख्यानार्थं सर्वैश्वर्यसम्पन्न इति पदा-न्तरसमभिव्याहार" दर्शनात् । समेधयति यन्नित्यं सर्वार्थाना-मुपक्रमम् । शिवमिच्छन्मनुष्याणान्तस्मादेव शिवस्मृत:" इत्या-नुशासनिकवचनेनापि शिवनाम्न: शिवंकरत्व वाचित्वं स्पष्टी-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कृतम्। इच्छैवसंकल्पमात्रेण सकलप्रपञ्चसृष्टुस्तस्य कारणम्। "समाभवन्ति मे सर्वे दानवाश्चामराश्चये। शिवोस्मिसर्वजन्तूनां शिवत्वन्तेनमेसुरा" इति कर्णपर्वणि शिववचनेनापितस्य तद्वाचित्वं स्फुटीकृतम्। एवञ्च शिवशब्दात्तत्करोतीति ण्यन्तादच् प्रत्ययेणे रनिटीति णिलोपे च इति शिवनामनिष्पत्तिर्द्रष्टव्या। मृडसुखन इति धातोः सुखयतीत्यर्थे निष्पन्नो मृडशब्दश्शं करशब्द शिवंकरत्ववाचीति स्फुटमेव। एवं तामसत्वदोषस्यबालिशप्रलिपितस्योद्धारः कृतः॥ २७॥

अथ पाशुपत्यवरणस्योद्धारः क्रियते।

यत्पाशुपत्यमवृणोरितिनित्यवाणी
शंसत्ययैमितत एव तदीशनित्यम्।
नित्यं यदेषहविरादिविधिस्तवायं
तस्यैवकल्पयति साहिवरेणलाभम्॥२८॥

सोब्रवोद्वरंवृणा अहमेव पशूनामधिपति रसानीति नित्याश्रुति वागेव हि रुद्रेण वरोवृत इति ब्रवीति। अस्यश्रुति वाक्यस्य। प्रवृत्तेः प्रागेव वरेण तेन भाव्यम्। अन्यथा सोब्रवीदिति भूतार्थप्रयोगानुपपत्तेः। अतोयत्र यत्रानादिकालप्रवृत्तेषु पूर्वपूर्वकल्पे ष्विदं वाक्यं पठ्यते ततस्ततः पूर्वसिद्धेन पाशुपत्येन भाव्यमित्यस्मादेव वाक्यात्पाशुपत्यमनादीति सिध्यति। एवमेवहि यागहोमादीनान्तया तयादेव तयावरवरणलब्धत्वेन प्रतिपादितानां नित्यत्वं समर्थनीयम्। अन्यथा सर्वेषामपि वैदिककर्मणामनित्यत्वं प्रसज्येतेति कल्पभेदेन धर्म्माधर्म्मविप्लवःस्यात्। तस्माद्यथा नित्यसिद्ध तत्तद्देवताकर्मसंबंद्ध प्रख्यापनद्वारा तत्तत्सन्निधिश्रुतोवर वरणार्थवादः कर्मप्रशंसार्थः। एवमयमपि नि-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्यसिद्धपशुपतिभाव प्रख्यापनद्वाराकर्मप्रशंसार्थोर्थवाद इत्यर्थः। इत्थमेव कर्मप्रशंसार्थं सदर्थवादतामभ्युपेत्य तत्रविष्णोरापतन्नत्यन्तापकर्षोपि परिहरणीयः। अन्यथा। त इषु ं सम स्कुर्वताग्नि मनीक ं सोम ं शल्यं विष्णुंतेजनमिति। त्रिपुरसंहारोपकरणतया रुद्रशेषभूताया इषोरंशावयवतां देवैस्तादिच्छयैव नीतत्वे न श्रुतस्य विष्णोरत्यन्तापकर्षः संप्राप्तो न निवार्यः स्यादितिभावः॥ २८॥

वरणमभ्युपेत्यापि परिहारान्तरमाह।

**शक्नोतिनैवपशुपाशवतीन्विवेक्तुम्**
**मुक्तःकथम्भवतुमोहित एषलोकः।**
**इत्याकलय्यभगवन्यदिवावरेण**
**स्पष्टीचकत्थ तदिदंकिमुदूषणाय॥ २९॥**

पाशुपतव्रतानुष्ठानाधीनः पशुत्वहरणरूपो मोक्षः। तदनुष्ठानञ्च देवमनुष्यादयो वयं पशवः पशूनाञ्चास्माकं पतिः शिव इति ज्ञानसापेक्षम्। तत्ज्ञानाभावे पाशुपतव्रतानुष्ठानासम्भवाल्लोकस्य मुक्तिरेव नस्यादिति विचार्यसकललोकानुग्राहकः शिव एव वरण व्याजेननिजंनित्यसिद्धं पाशुपत्यं सर्वलोकप्रसिद्धयर्थं स्पष्टीचकारेत्युपपद्यत इत्यर्थः। अयमर्थोलिङ्गपुराणे दर्शितः। स्वतस्सिद्धं पाशुपत्यं युष्माकं पशुतापि च। तदत्रदर्शयाम्यद्यपशुबन्धविमोदत इति॥ २९॥

फलाभावेपि सृष्ट्यादि व्यापारवत्पाशुपत्यवरणं लीलामात्रं वास्त्विति परिहारान्तरमाह।

**किन्तेथवावरवृतेः फलचिन्तनेन**

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

लीलैवशूलधरसन्ततमीदृशीते ।
उद्दिश्यकिंफलमवाप्तसमस्तकामः
शश्वत्सृजस्य वसिसंहरसिप्रपञ्चम् ॥३०॥

एवं पाशुपत्यवरणमेव नास्तीति तत्सत्वे पि नित्यसिद्धस्यैव पाशुपत्यस्य प्रत्यायनार्थन्तदिति तथाभूतफलाभावेपि सृष्ट्यादिवल्लीलामात्रं तदिति च परिहारैः पाशुपत्यस्यानादिसिद्धत्वमुपपादितम्। तस्य तथात्वानङ्गीकारेबाधकमाह ॥ ३० ॥

आगन्तुकं यदिभवेत्तवपाशुपत्यम्
अर्थोपि निस्तरति नानु पपत्तिसीमाम् ।
संसारिणो हि सकलाः पशवोनिरुक्ता
स्स्यादादिमत्कथमधीश्वरतत्पतित्वम् ॥३१॥

पाशुपत्यं हि सर्वजीवान्प्रत्याधिपत्यरूपं सर्वेश्वरत्वमेव। "आत्मानः पशवः प्रोक्ता स्सर्वेसंसारवर्त्तिनः। तेषाम्पतित्वाद्देवेश शिवः पशुपतिस्मृत इति। शैवलैंगादि पुराणोद्घोषात्। अतस्तदनादिसिद्धपरब्रह्मधर्मतया धर्मिग्राहकमान सिद्धं नादिमत्कल्पयितुं युक्तमित्यर्थः। एतेन तत्तेजो सृजतेत्यादौ भूतार्थप्रत्ययसत्वे पि यथातेजः प्रभृतीनां न नित्यत्वं तथा पाशुपत्यस्याप्यस्त्विति शङ्कानिरस्ता। तेजः प्रभृतीनामनित्यत्वेपि प्रवाहानादि पूर्वकल्पवृत्ततत्सृष्टेरतीतत्वं भूतार्थप्रत्ययस्यालम्बनमित्युपपद्यते । न चेह्यभूतभावि वर्त्तमानसकलजीवाधिपत्येपारमेश्वरनित्यसिद्धधर्मेतन्यायः प्रवर्त्तयितुंशक्यते ॥ ३१ ॥

एवं प्रसाधितं पाशुपत्यस्यानादित्वं पशुत्वप्रतिबंद्यापि स्थापयति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आस्तां पतित्वमदसीयमिदं पशुत्वम्
नार्हत्यधीशकथमप्यधुनातनत्वम् ।
यद्यस्ति तस्य वरण श्रवणेषुकाचि
न्निर्वाहरीतिरपरानकिमत्रसास्यात् ॥ ३२ ॥

पतित्ववरणकालेसर्वेषामात्मनां पशुत्वमपि सद्वृत्तमिति लैंगादि पुराणेषु प्रसिद्धम् । तथाभारतेपि कर्णपर्वणि । "पतित्वञ्चैव मे लोका स्सर्वे कल्पयन्तुपीडिताः । पशूनाञ्च पतिस्त्वाद्धभ्यविष्यामि सुरोत्तमाः । इति देवावच श्श्रुत्वा देवदेवस्य भूपते । विषादमगमन्सर्वेपशुत्वं प्रतिशंकिता" इति तत्पशुत्वं सादि भवितुन्नार्हतीति तद्वरणश्रवणेयः परिहारः प्रागुक्तेष्वन्यतमोन्योवास एव पतित्ववरणश्रवणे प्यस्तित्यर्थः ॥ ३२ ॥

भवतु पशुत्वमपिस्यादित्यत्राह ।

मायादिपाशदृढबन्धविमोहितानाम्
यत्स्वामिकर्मकरणं यजनादिरूपम् ।
गौणंम्पशुत्वमिदमेवहिदेहभाजा
मेतच्चराचरपतेकथमादिमत्स्यात् ॥ ३३ ॥

ननु लोकानां शिवपशुत्वं न मुख्यं शिवं प्रतिगवाश्वादि रूपत्वं तदभावात्किन्तुयथागवाश्वादीनां स्वामिना पाशैर्बद्धानां दोहन वहनकर्षणादिकार्यैस्तदुपकर्तृत्वमेवं शिवेन मायाकर्म्मादिभिर्बद्धानां यज्ञादिभिराराधनरूपैः शिवोपकर्तृत्वमेवतद्वाच्यम् । तच्चानादिसंसार प्रवाहायातं कथमप्य नादिमद्भवतीत्यर्थः । इत्थं गौणमेषां पशुत्वं शिवपुराणे स्पष्टी कृतम् । "ब्रह्माद्यास्थावरान्तास्वदेव देवस्य शूलिनः । पशवः परिकीर्त्यन्तेसंसारवशव-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्ति नः। तेषां पतित्वाद्देवेश शिवः पशुपतिस्मृतः। मलमायादिभिः पाशै स्सबध्नाति पशून्पतिः। स एव मोचकस्तेषां भक्त्या सम्यगुपासितः। चतुर्विंशति तत्वानिमायाकर्मगुणा अभी। विषया इति कथ्यन्ते पाशा जीव निबन्धनाः। ब्रह्मादिस्तम्बपर्यन्तान्पशू न्बध्वामहेश्वरः। पाशैरेतैः पतिर्देवः कार्यं कारयति स्वकम्" इति॥ ३३॥

अथ परमेश्वरं प्रति वरदातुः कस्य चिदसम्भवादपि वरवरण श्रवणानि तुच्छीकरोति।

त्वामामनन्ति परमीश्वरमीश्वराणाम्
त्वान्दैवतञ्चपरमं खलुदैवतानाम्।
त्वामेवनाथपरमञ्च पतिम्पतीनाम्
कस्माद्वृतंवरदविश्वसिमोवरन्ते॥ ३४॥

"तमीश्वराणाम्परमम्महेश्वरं तं दैवतानां परमञ्च दैवतम्। पतिं पतीनां परमं परस्ताद्विदामदेवं भुवनेशमीड्यम् इति। श्वेताश्वतरोपनिषन्मं चार्थोनुसंगृहीतः। ईश्वराणां जगन्नियन्तॄणां देव तानां जगदाराधनीयानां पतीनां जगत्पालकानां एवं पाशुपत्य वरणं दोष इत्य तत्प्रत्युक्तम्॥ ३४॥

अथ गंगाधारणमपकर्षहेतुरिति प्रलपतोबालिशांप्रति बोधयति।

गंगाधृता न भवताशिवपाविनीति
नास्वादितोमधुर इत्यपि काळकूटः।
संरक्षणायजगतां करुणातिरेकात्
कर्मद्वयंकलितमेतदनन्यसाध्यम्॥ ३५॥

गङ्गाधारणन्तावदनन्यसाध्यमिति महाभारते भगीरथं प्रति

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

गङ्गावचनेनावगतम्। "करिष्यामि महाभाग वचस्तेनात्र संशयः। वेगन्तु मम दुर्धार्यं पतन्त्या गगनाच्युतम्। नह्यमस्त्रिषुलोकेषु कश्चिद्धारयितुं नृप। अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात्" इति। रामायणेपि। तं प्रति ब्रह्मवचनेनावगतम्। "गङ्गायाः पतनं राजन् पृथिवी न सहिष्यते। तां वै धारयितुं वीर नान्यं पश्यामि शूलिन" इति। भागवते तु। "कोपि धारयितुं वेगं पतन्त्या मे महीतले। न चेद्भूमितलं भित्वा नृपयास्ये रसातलम्" इति पृष्टवतीं गङ्गां प्रति भगीरथवचनेनाप्यवगतम्। "धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम्। यस्मिन्नोतमिदं प्रोतं विश्वं शाटीवतन्तुषु इति। इदं च गंगाधारणं न केवलं भगीरथपितामहोत्तारणार्थं किन्तु गङ्गावेगाद्भूदारण परिहारेण जगत्संरक्षणार्थमपि सर्वोपकारकस्यागस्त्यनिपीतस्य समुद्रस्य परिपूरणेन तदर्थमित्यपि भारते समधिगतम्। तत्र त्वारण्यपर्वणि अगस्त्यनिपीतस्य लोकपावन तया सर्वोपकारकस्य समुद्रस्य परिपूरणोपायं पृष्टुमागतान्देवान्प्रति ब्रह्मणा भगीरथः स्वपितामहोत्तारणाय गङ्गामानेष्यति तदा तया च समुद्रस्य परिपूरणं भविष्यति विगतज्वराभवथेत्युक्तमिति प्रपञ्चितम्। एव मनन्यसाध्यं गङ्गाधारणं जगत्संरक्षणार्थं शिवे न कृतमिति न तु स्वस्यापि पावनीगंगेति तद्धारणं कृतम् तथाकालकूटविषं मधुरमिति ना स्वादितं किन्तु जगत्संरक्षणार्थमेव। एवमिदमपीति दृष्टान्ततया संप्रति पन्नकालकूटग्रसनोदाहरणम्: तद्धि जगत्संरक्षणार्थमिति शिवपुराणादिषु प्रसिद्धमेव। भागवतेऽपि तथोक्तम्। तत्र हि कालकूट प्रादुर्भावानन्तरम्। "तदुग्रवीर्यं दिशिदिश्युपर्यधो विसर्पदुत्सर्पदसह्यवीर्यम्। भीताः प्रजादुद्रुवुरंगसेश्वरा अरक्ष्यमाणा शरणं सदाशिवम्" इत्युक्ता ततस्तत्प्रसादनाय त्रिमूर्त्युत्तीर्णनिस्त्रैगुण्यशिवाभिधान

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

परब्रह्मरूप परमात्मतत्वतया तस्य कैलासवासिनः श्रीकण्ठरुद्रस्य शिवविभूति विशेषस्य प्रजापतिभिः कृतैस्तोत्रैः कालकूटसंहरणमिदं ब्रह्मादीनामप्यसाध्यमतस्त्वदेकशरणावयमागता इति ज्ञापयितुमुक्तम्। "न ते गिरित्राखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम्। ज्योतिः परं यस्य रजस्तमश्च सत्वं न यद्ब्रह्मनिरस्तभेदम् इति। गुणविशेषोपाधिकब्रह्मविष्णुरुद्रभेदरहितं तत्समष्टिरूपपरमशिवात्मकमित्येतन्निरस्तभेदमिति अनेनोच्यते। एवं लोकोपकारार्थं शिवेन कृतं गङ्गाधारणमपि यदि विष्णुपद्या स्स्यात्तदा। "यच्छौ च निस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिव शिवोभूत्। ध्यातुर्मनश्शमलशैलनिसृष्ट वज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम्" इत्यादि पञ्चषाक्षरश्रवणपरितुष्टानां कूपमण्डूकानां प्रलपितस्य कियानप्यवकाश स्स्यात्। इदं तु धारणं भगीरथ प्रसादितायाश्च दुर्मुखलोकस्थिताया हैमवत्या एव गङ्गाया इत्येतद्विभज्यदर्शय इति॥ ३५॥

गङ्गापि नैव भवताकरि चर्म्मधारि
न्मूर्ध्नाधृता मधुरिपोश्चरणात्क्षरन्ति।
किन्तु प्रसादनपराय भगीरथाय
दत्वावरं शतधृते स्सदनात्पतन्ती॥ ३६॥

त्रिविधागङ्गा। एकागौरीकरोद्भवा। स्कान्दे दक्षकाण्डे। पुराकैलासशिखरे पार्वतीपरमेश्वरं। छादयामास नयने पाणिभ्यां प्रणयक्रुधा इत्यारभ्य। जटायां रोमशिचैकस्मिन् बभारजलबिन्दुवत्। इति ते ब्रह्मविष्णिन्द्रा पृथक्शम्भोर्जलम् मुदा। गृहीत्वा स्वेषु लोकेषु कल्पयामासुरञ्जसा। वैष्णवीपृथितालोके विष्णो

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

स्त्रेयम् सरिद्वरा। कमण्डलौ पराऽत्तद्ब्रह्मा स्त्रीयाम्दधौसदा। आकाशगङ्गाविख्याता स्वर्लोके या व्यवस्थिता। ततः कालेन महता ब्रह्मलोके स्थितां नदीम्। भगीरथः प्रयत्नेन नयति स्म क्षितौ यदा। तदा बभार तां शम्भुरुल्लोलामतिभीषणाम्” इत्यादिना प्रपंच्यते। इतरा, हिमवतः कन्यका ब्रह्मलोके प्रवहन्ती केनचिदंशेन ब्रम्हलोकाद्भूलोकं भगीरथेन नीता। अन्यातु ऊर्ध्वं प्रसारितत्रि विक्रमरूपभगवच्चरण प्रभवासत्यधः पतन्ती। केनचिदंशेन व्योम्नि स्थिता देवानां विहारोपयोगिन्यंशान्तरेण मेरोरुपरि ब्रह्मपुर्याश्च तस्यपु दिक्षु प्रवाहानिलेन चतुर्धा विभक्तानिपत्य प्राच्यादिसमुद्रान्प्रविष्टा। तथाहि वामनपुराणे। “श्वेताङ्गी पद्मपत्राक्षीनीलकुञ्चितमूर्धजा। श्वेतमाल्यांबरधराकुटिलानामचापरा। इत्युमायाज्यायसीं हिमवत्सुतां प्रस्तुत्योक्तम्। दिवाकरैश्च रुद्रैश्च वसुभिश्च तपस्विनी। कुटिला ब्रम्हलोकन्तु नीता शशिकर प्रभा। अथोचुर्देवता स्सर्वाः किं प्रियज्जनयिष्यति। पुत्रन्तारकहन्तारं ब्रह्मन् व्याख्यातुमर्हसि। ततो ब्रवीत्सुरपतिर्न्नेयम् शक्ता तपस्विनी। शार्वं धारयितुन्तेजो वराकी मुच्यतामियम्। ततस्तु कुटिला क्रुद्धा ब्रह्माणं प्राह नारद। तथा यतिष्ये भगवन्यथा शार्वं सुदुर्धरम्। धारयिष्याम्यहन्तेजस्तथैव शृणुसत्तम। तपसाहं सुतप्तेन समाराध्य महेश्वरं। यथा हरस्य तद्वीर्यं धारयिष्ये पितामह। तथा देव करिष्यामि सत्यं सत्यम्मयोदितम्। ततः पितामहः क्रुद्धः कुटिलामपिदारुणम्। भगवानादिशत्ब्रह्मा सर्वेश स्स महामुने। यस्मान्मद्वचने क्रुद्धेन स्थितं कुटिलेत्वया। तस्मान्मच्छापनिर्दग्धात्वमद्यापो भविष्यसि। इत्येवं ब्रह्मणा शप्ता हिमवद्दुहितामुने। आपोमयी ब्रह्मलोकं प्लावयामासवेगिनी। तामुत्थितजलान्दृष्ट्वा बबन्ध प्रपितामहः। ऋक्सामाथर्व यजु-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

भिर्वाङ्मयैर्बन्धनैर्दृढम्। सावद्ध्वा संस्थिता ब्रह्मन्तथैव गिरिकन्यका। आपोमयी प्लावयन्ती ब्रह्मणोविमला जटा" इति। अत्र गङ्गैव कुटिलेति नामान्तरेणोक्ता। "एते वैशैलराजस्य सुतेलोक नमस्कृते। गङ्गा च सरितां श्रेष्ठा उमादेवीचराघव इति। रामायणे हिमवत्सुतायामुमाज्येष्ठायां कुटिलापदस्थाने गङ्गापददर्शनात्। "अथ ज्येष्ठांसुरा स्सर्वे देवतार्थचिकीर्षया। शैलेन्द्रं वरयामासुर्गङ्गान्त्रिपथगान्नदीम्। ददौ धर्मेण हिमवान्तनयां लोकपावनीम्। स्वच्छन्दपथ गाङ्गङ्गां त्रैलोक्यहितकाम्यया। प्रतिगृह्य ततो देवास्त्रैलोक्य हितकारकाः। गङ्गामादाय वैगच्छन् कृतार्थेनान्तरात्मना"। इत्युदाहृतवामनपुराणोक्त कुटिलावृत्तान्तस्य गङ्गायामेव रामायणे संक्षिप्य प्रतिपादनाच्च। अत्र हि देवतार्थ चिकीर्षयेति वरयामासुरिति धर्मेणेति चोक्त्या तारकवधादिरूपदेवकार्य चिकीर्षयासेनान्योत्पादनाय शिवस्य भार्यार्थे तामेव कन्यां शिवस्य धर्मप्रजार्थं वृणीमह इति वरसम्बन्धि कर्त्तृक कन्यावरणप्रकारेण वरयामासुः। सोपि कन्यादानधर्मेण ददावित्यर्थः प्रतीयते। अतो वामनपुराणोक्तार्थच्छायापत्ति दर्शनात्तामादाय ब्रह्मणोन्तिकं निन्युरित्यर्थो ग्राह्यः। तदनन्तरंब्रह्मशापान्नदीरूप प्राप्तिस्त्रिपथगां नदीमित्यनेनसूचिता। इदं हि विशेषणं न प्राचीन तदीयरूपकीर्तनपरम्। "भगवन् श्रोतुमिच्छामि गङ्गान्त्रिपथागांन्नदीम्। त्रैलोक्यं कथमाक्रम्यगतानदनदीपतिम्"। इति रघुनाथपृष्टेन विश्वामित्रेण त्रिपथगा रूपप्राप्ति वर्णनोपोद्घातत्वे नास्याः कथा यावर्ण्यमानत्वात्प्रागेव त्रिपथगारूपसद्भावे देवैरिदानीं नीतत्वो त्तययोगाच्च। किन्तु भाविनीं संज्ञामाश्रित्येदं विशेषणम्। शैलेन्द्रो हिमवान्नामधातूनामाकरोमहान्॥ तस्य कन्या द्वयं रामरूपेणा प्रतिमं भुवि। इत्युपक्रमादतिसौन्दर्यशालितया शिववीर्यधर-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

णत्त्वमतां विचिन्त्यकन्यारूपेण ब्रह्मलोकन्नीते त्येवार्थो ग्राह्यः। अथ त्रिपथगामिति वनदो भित्ये तदपि भाविनीं संज्ञामाश्रित्य नदीरूप प्राप्तिर्वामनपुराणोक्त ब्रह्मशापेन त्रिपथगारूप प्राप्तिर्नदीरूपं प्राप्य ब्रह्मलोके स्थितायास्तस्या भगीरथानुरोधात् भुव्यवतरणेन पातालप्रवेशेन चेति हृदि निधाय त्रिपथगारूप-प्राप्तेः पृष्टत्वात्सैवनवभिः सर्गैः प्रपञ्चिता। नदीरूपं प्राप्य ब्रह्म-लोके स्थिति स्त्वपृष्टत्वान्न प्रपञ्चिता। सिद्धवत्कृत्य तत्र तत्र सूचिता। यद्वह्निना शिववीर्येनिपीते सेनान्युत्पत्तिमलभमा-नान्ब्रह्मसमीपं गतान् देवान् प्रति। "इयमाकाशगागङ्गा यस्यां पुत्रं हुताशनः। जनयिष्यति देवानां सेनापतिमरिन्दमम्। ज्येष्ठाशैलेन्द्र दुहिता जनयिष्यति तंसुतम्। उमायास्तद्बहुमतं भविष्यति न संशयः"। इति ब्रह्मणो वचनेइयमाकाशगा गङ्गेति निजलोक एव सन्निहिताकाशगतत्वेन गङ्गानिर्दिष्टा। यच्च भगीरथेन गङ्गावतरणार्थं ब्रह्माणमुद्दिश्यतपः कृतमित्यु-क्तम्। यच्च प्रसन्नेन ब्रह्मणावरन्दातुमागतेन। इयं हैमवतीगङ्गा ज्येष्ठाहिमवतस्तुनेति ब्रह्मलोकस्थितैवगङ्गा इयमिति निर्दिष्टा। एतैर्लिङ्गैः गङ्गाया नदीरूपप्राप्ति र्ब्रह्मलोके स्थितिश्च सूचिता। एवन्तावद्वामनपुराणोक्ता कुटिला गङ्गेवेति रामायणानुसारि-णावगम्यते। किञ्च वायनपुराण एवाग्निमोपाख्यानानुसारेणा-प्यवगम्यते। "अग्रे हि शिववीर्यं निपीतवन्तं वह्निं प्रस्तुत्यैव मुपाख्यायते। यत्तत्पीतं हुताशेनस्कन्नं शुक्लं पिनाकिनः। तेन क्लान्तोभवद्ब्रह्मन्मन्दतेजा हुताशनः। वैश्वानरस्ततस्तूर्णं ब्रह्म-लोकं जगामसः। स गच्छन् कुटिलान्देवींददर्श पथिपावकः। तांदृष्ट्वा प्राह कुटिलां तेज एतत्सुदुर्धरम्। महेश्वरेण संत्यक्तं निर्दह्येहं वरानने। तस्मात्प्रतीच्छपुत्रोयं भवदीयो भविष्यति। इत्यग्निनोक्तास्मित्वा तु कृत्वा स्वम्वपुरन्नतम्। प्रच्छिपात्वांभसि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्राह्नेत्येवमाह महापगा। ततो विसृष्टस्तद्देवी शार्वन्तेजोह्य पूरयत्। हुताशनोपि भगवान्कामचारी जगामसः। पञ्चवर्षस-हस्रान्ते कुटिलाज्ज्वलनोपमा। धारयन्ती तदागर्भं ब्रह्मणस्थान-मागता। तांदृष्टवानब्ज जन्मा ऽन्तर्वत्नीं महायशाः। दृष्ट्वा पप्र-च्छकेनायंतवगर्भस्समाहितः। सा चाहशांकरं यत्तच्छुक्लं पीतं हि वह्निना। तदशक्तेन तेनाद्यनिक्षिप्तम्मयिसत्तम। पञ्चवर्ष सहस्राणि धारयन्त्याः पितामह। गर्भस्य वर्त्तते कालोनावप-द्यतेकर्हिचित्। तच्छ्रुत्वा भगवानाह गच्छत्व मुदयं गिरिम्। तत्रास्ति योजनशतं रौद्रं शरवणम्महत्। तत्रैनं क्षिपसु श्रो-णिविस्तीर्णे गिरिसानुनि। दशवर्ष सहस्रान्ते ततो बालो भविष्यति। सा श्रुत्वा ब्रह्मणो वाक्यं कुटिला गिरिमागमत्। आगत्य गर्भन्तत्याज सुखेनैव महामुने। सातु सन्त्यज्यतं बालं ब्रह्माणं सहसागमत्। आपोमयी ब्रह्मशापात्संजाता कुटिला सतीति"। एवं वह्नि विसृष्टशिववीर्यधारणेत्यापि कुटि-ला गङ्गेति निश्चीयते। रामायणे पुराणान्तरेषु च गङ्गायां वह्निना शिववीर्यं विसृष्टमित्यैककंठ्येन प्रतिपादनात्। एवं तावत्। आद्या हैमवती गङ्गा ब्रह्मशापान्नदीत्वं प्राप्ता भगीरथा-नुरोधाद्भुवं प्राप्ता सतीत्रिपथगाजातेति सप्रमाणसुपपादिता। अन्यातु विष्णुपदीगङ्गा क्वचिदूर्ध्वप्रसारित त्रिविक्रम चरणांबुज संक्षालनार्थं सत्यलोकस्थित ब्रह्मकमण्डलु निस्सृतजलरूपा वर्णिता। अन्यत्र तच्चरणनिर्भिन्नोर्ध्वाण्डच्छिद्र निस्सृत बहि-र्जलरूपाप्रतिपादिता। वामनपुराणेतु। "विष्णवंघ्रिणाप्रसरता कटाहेभेदितेम्बरात्। कुटिला विष्णु पादान्तात्पपात कुपिता ततः। तस्माद्विष्णुपदीत्येव नाम्नाख्यातिरभून्मुने" इति। तत्रो-र्ध्वाण्डकपालपर्यन्त प्रसरद्विष्णुपादाग्रनिर्भिन्ना कुलीभूत ब्रह्मा-



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

लोक प्रवह त्कुटिलाजलरूपोक्ता। सर्वोपि संहारेत्रिविधजल-रूपेषापर्यवस्यति साच विष्णुपदान्निर्गतैव मेरोरुपरिनिपत्य तद्वैव सागरं प्राप्नेति प्रतिपादितम्। सभापर्वणि। तच्छिरःप्रात्यन्दिता तत्पादाद्भ्रष्टाथ निम्नगा। संसारसागरं साध्रुपावनी सागरं गमेति। कूर्मपुराणे तु। सा विष्णुपदी व्योमगङ्गा जातेत्युक्तम्। अथाण्डभेदादपतच्चगोतलं महाजलं तत्पुण्यक्लृङ्ग्निसजुष्टम्। प्रवर्तते चापि सरिद्वरा तदागङ्गे त्युक्ता ब्रह्मणाव्योमसंस्थेति। देवानां विहारार्थं केन चिदंशेन व्योम्नि स्थिता अवशिष्टा सागरे पतितेत्युभयानुरोधेन योज्यम्। एवं चया हैमवती गङ्गासैव भगीरथानुग्रहार्थं शिवेन शिरसाधृता। न विष्णु पदीति ततो न बालिशानामत्र शंकावकाशः। ननु विष्णुपदी शिवेन शिरसा धृतेत्यपि पुराणान्तरवचनैरप्यवगम्यते। तथाहि विष्णुपुराणे पठ्यते। "अर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र व्यवस्थितः। एतद्विष्णुपदन्दिव्यं चितोयं व्योम्नि भास्वरम्" इत्युपक्रम्योक्तम्। "ततः प्रवहति ब्रह्मन्सर्वपापहरासरित्। गङ्गा देवाङ्गनाङ्गानामनुलेपन पिञ्जरा। वामपादांबुजां गुष्ठनखस्रोतो विनिर्गता। विष्णो र्बिभर्तियां भक्त्या शिरसा हर्निशं ध्रुवः। तत स्सप्तर्षयो यस्याः प्राणायामपरायणाः। तिष्ठन्ति वीचिमालाभिरूह्यमानाजटाजले। वार्योघै स्सन्ततैर्यस्याः प्लावितं शशिमण्डलम्। भूयोधिकतरां कान्तिं वहत्ये तदनुत्तमम्। मेरुपृष्ठे पतित्वोच्चैर्निष्क्रान्ता राशिमंडलात्। जगतः पावनार्थाय याप्रयाति चतुर्दिशम्। सीतायालकनन्दा च चतुर्भद्रा च संस्थिता। एकैव याचतुर्भेदाद्दिग्भेदगति लक्षणा। भेदस्त्वालकनन्दाख्यं यस्या शर्वोपि दक्षिणम्। दधार शिरसा प्रीत्यावर्षाणामधिकं शतम्। शम्भोर्जटाकलापाच्च विनिष्क्रान्तास्थि शर्करा। प्लावयित्वादिवन्निन्ये सर्वान्सा

सगरात्मजान्" । मार्कण्डेयपुराणेऽपि । "ध्रुवाधारं जगद्योनेः पदं नारायणस्य यत् । ततः प्रवृत्ताया देवी गङ्गा त्रिपथगामिनी । साप्रविश्य सुधायोनिं सोममाधारमम्भसाम् । संवर्त्तमानार्क-रश्मिसन्ततिं लोकपावनीम् । पपातमेरुपृष्ठे च साचतुर्धा ततो ययौ । इत्युपक्रम्य सीतायाः पूर्वसमुद्रप्राप्तिमुक्त्वा । "तथैवालक-नन्दाख्या दक्षिणागंधमादने । मेरुपादवनं गत्वानन्दनन्देवनन्द-नम् । मानसञ्च महावेगात्प्लावयित्वा सरोवरम् । मानसाच्छै-लराजानं रम्याद्रिशिखरंगता । तस्माच्च पर्वतान्सर्वान् दक्षि णाये क्रमोदिताः । तान्प्लावयित्वा संप्राप्ता हिमवन्तम्महागि रिम् । दधार तत्रतां शम्भुर्नमोच वृषभध्वजः । भगीरथेनोपवा सैस्तु त्वा चाराधितो विभुः । तत्र मुक्ताच शर्वेण सप्तधालवणो दधिम् । प्रविवेशत्रिधा प्राच्यां सा तदातु महानदी । भगीर-थस्यानुरथं स्रोतसैकेन दक्षिणा" । स्कान्दे केदारखण्डे । "सङ्क-ल्पेनैव वृद्धेवामनो भगवानजः । पदैकेन महीव्याप्ता विष्णुना प्रभविष्णुना । स्वर्लोकोपिद्वितीयेन व्याप्तस्तेन महात्मना । सत्य-लोकस्थितेनैव ब्रह्मणा परमेष्ठिना । कमण्डलुगतेनैव ह्यम्भसाचा-वनेजने । तत्पादसंपर्कजलाच्चजाता पापापहामङ्गलमङ्गलाच । यया त्रिलोकी च कृता पवित्रा ययाच सर्वेसगरा स्समुद्धृताः । यया कपर्दः परिपूरितश्चशम्भोस्तदानींच भगीरथेन" इति । म-हाभारते । विष्णोः पादाच्छिंशुमाराद्ध्रुवाच्च सोमात्सूर्यान्मेरु रू-पाच्च विष्णोः । समागता शिवमूर्ध्नो हि मादिम्" । इति चेदु च्यते । वामनपुराणरामायण वचनस्वारस्यानुरोधेन च ब्रह्मलो-कस्थिता हैमवती गंगाभगीरथेन नीताशिवेन धृताच । इतरव-चनानामर्थवादत्वापत्तेः । विष्णुपदान्निर्गताया हैमवती जले-नापि मिश्रणमासीदित्ये तावदवलम्ब्यतदभेदोपचारेण विष्णुप-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

द्रौ शिवेन धृता सागरानपि पावितवतीति विष्णुपुराणवचना-
न्युदाहृतानि योजनीयानि । कथमन्यथा त्रिविक्रमावतारका-
ल एव मेरौ निपत्यभुविप्रवहन्त्यां विष्णुपद्यां सत्यां भगीरथेन
त्रिदिवाद्गंगानयनं कृतमिति विष्णुपुराण एवोक्तं संघटेत ।
ननु त्रिविक्रमावतारकालेनिर्गता विष्णुपदी ध्रुवलोक एवस्थि-
ता सा भगीरथेन प्रसादिता मेरौ निपत्यदक्षिणस्यान्दिशि
प्रवहन्ती शिवेन शिरसा धृता हिमवन्तं प्राप्यसप्तधा प्रसृतेति
कल्पयिष्यते । रामायणेतु किंचिदंशं परित्यज्य कथावर्णिता ।
तस्मादियमाकाशगागङ्गेति ब्रह्मसेवार्थं ब्रह्मलोकमागता विष्णु-
पदी ब्रह्मणेयमिति निर्दिष्टेति कल्पयिष्यत इति चेन्मैवं । तच्छि-
द्रात्स्यन्दितेत्युदाहृतभारतश्लोके विष्णुपदान्निर्गमनानन्तरमेव
विष्णुपद्याश्शीघ्रं सागरप्रवेशस्योक्तत्वेन भगीरथकालपर्यन्तं ध्रु-
वलोके तदवस्थानानुपपत्तेः । न च तदा केन चिदंशेन भुविप-
तितासागरमेव प्रविष्टा न भूलोके प्रवहन्ती स्थिता अतो
भगीरथ कृतं तस्यास्त्रिदिवादानयनं संघटत इति वाच्यम् ।
भगीरथार्थमेव तरन्त्यास्तस्यामेरौ पतने तत्र निपत्यस्वत एव
दिक्षु प्रवहन्त्याः पतनवेगधारणार्थं शिवप्रसादनस्याकर्त्तव्यत्वेन
तदुक्त्यसंघटनात् शिवमूर्द्धन्येवपतने मेरौ निपत्य दक्षिणस्यान्दि-
शि शिवेन धृतेति विष्णुपुराणादि संघटनाभावाच्च । अस्मत्पक्षे
मेरौ तन्निपतनोक्तिस्त्रिविक्रमावतारकालवृत्तान्त विषयतयाव्या-
ख्या । तदा मेरौ निपतिता ततः प्रभृत्यद्यतनपर्यन्तं भुविप्रवहन्त्ये-
ववर्तमाना । जगतः पावनार्थाय सा प्रयाति चतुर्दिशमित्युदा-
हृत विष्णुपुराणवचसावगतेति तस्यामिह सत्यामत्रचित्रिदिवात्त-
दानयनार्थं भगीरथ कृतयत्नस्या संघटनाच्च । तस्मात्संघटनार्थ-
मियमाकाशगागंगेत्यादि रामायणवचने स्वारस्य लाभार्थञ्च ब्र-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ध्रुवलोकस्थिता हैमवती भगीरथेन तपोभिरानीता शिवेन धृता सागरानपि पावितवती गंगेति तदभेदोपचारेण तद्वृत्तान्तस्यैव तस्यां विष्णुपुराणादिषु वर्णनमित्येव कल्पनं युक्तम्। ध्रुवलोकाद्भगीरथेन विष्णुपद्यानीतेति कल्पनं न संगच्छते। त्रिविक्रमावतारस्तु पश्चात्कालीनः। भगीरथतपश्चर्या तत्पूर्वकाल इति विरोधोऽवगम्यते। त्रिविक्रमावतारकालमारभ्य मेरौ निपत्यभुवि प्रवहन्त्यां शिवधृतत्वादि तद्वृत्तान्तवर्णनस्य तदभेदोपचारमूलकत्व कल्पनावश्य भावादित्यलं प्रपञ्चेन॥ ३६॥

नन्वस्त्वेव मेतत्। तथापि विष्णुपदी निर्गमनसमये तन्मार्गस्थिता हैमवती तया मिश्रिता भूदतः पाविनीति सा शिवेन मूर्ध्ना धृतेति शंकां हैमवत्या शिवमूर्धसंबन्धादेव पावनत्व प्रतिपादनेन निरस्यति॥

**सापित्वदंगपतिता नितरांपवित्रा**
**जाताततस्त्वदभिषेकजलोपमेति।**
**स्वर्लोकवासिभिरनंतरमादृतासीत्**
**येमूर्धभिर्दधति ते चरणोपसृष्टम्॥ ३७॥**

रामायणे विश्वामित्रवचनम्। "आकाशादपतद्रामशिवे शिव शिरस्युत। अचिन्तयच्च सादेवो गङ्गापरमदुर्धरा। विशाम्यहं हि पातालं स्रोतसाऽऽगृह्य शंकरम्। तस्यावलेपनं श्रुत्वाक्रुद्ध स्म भगवान् हरः। तिरो भावयितुं बुद्धिं चक्रे त्रिनयनस्तदा। सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि। हिमवत्प्रतिमाकारे जटामण्डलगह्वरे"। इत्याद्युक्ता। तत्र देवर्षिगन्धर्वावसुधातलवासिनः। भवांगपतितन्तोयं पवित्रमिति पस्पृशुः। शापात्प्रतिच्युता ये च गगनाद्वसुधातलम्। कृत्वा तत्राभिषेकन्ते

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

बभूवुर्गतकल्मषाः। धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता। पुनश्चाकाशमाविश्य स्वान् लोकान्प्रतिपेदिरे। इत्युक्तम्। तत्र हि शिवे शिव शिरस्युतेति पुण्ये रुद्रस्य मूर्धनीतिच शिवपुण्यशब्दाभ्यां शिवमौलेः परममङ्गलत्व परम पवित्रत्वञ्चोक्तातत्सं-बन्धादेव गङ्गायाः पावित्र्यातिशयो भवाङ्गपतितं तोयं पवित्र-मितिपस्पृशुः। शापात्प्रति हता येचेति च स्पष्टमेवोक्तः। अयमे-वार्थः कूर्मपुराणे बहुविधगङ्गामाहात्म्य प्रतिपादनानन्तरं संक्षेपेण कथितः। "पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम्। महेश्वरात्परिभ्रष्टासर्वपापहराशुभेति। येमूर्द्धभिर्दधतिते चरणो पसृष्टमित्यनेन भागवतोदितः कश्चिदर्थं स्मारितः। तत्र शिवा-पदेशोप्यशिवोमत्तोन्मत्तजनप्रियः। इत्यादि परुषोक्त्या शिवं दूषितवन्तं दक्षं प्रति दाक्षायिण्याः सोल्लुण्ठनमिदं वचनम्। किं वा शिवाख्यमशिवं नविदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्यजटा-श्मशाने। तन्माल्यभस्मनृकपालवसत् पिशाचैर्येमूर्धभिर्दधति तच्चरणोपसृष्टमिति। शिवश्मशानवासीभूत्वा तत्र विप्रकीर्ण-माल्यभस्मनृकपालानि धृत्वा पिशाचै सहस्थितोनाम मात्रेण शिवः। चारित्रेणत्वशिव इत्येतत्त्वमेक एव जानासि। ब्रह्मादयो नजानन्तिकिम्। ये ब्रह्मादय श्शिवचरणनिर्गत तल्लग्नधूल्यादि-कमपि परममंगलं परमपवित्रमिति शिरोभिर्वहन्तीति श्लो-कार्थः। एतेन हि भागवत एव चरणसंलग्नधूल्यादीनामपि परमपावित्र्य वचनेन तन्मूर्ध्नस्ततोधिकं पावित्र्यं सूचितम्। अतोरामायणाद्युक्तेस्तन्मूर्ध्न संसर्गादेव गङ्गायाः परमपावित्र्ये-ऽभिमतेपि प्रधानप्रतिपाद्यभगवन्महिमस्तुत्यर्थं यच्छौच नि स्सृतेत्यादि यत्किंचित्तत्रोक्तमिति न तत्रादरोमनीषिभिः कार्यः भागवते हि प्रष्टुर्भक्त्यनुसारेण कृष्णावतारमहिमानमेव प्राधा

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

श्रीलक्ष्मीधर-विद्यामन्दिर, देवप्रयाग (गढ़वाल-हिमालय) (व्यवस्थापक- पं. चक्रधरजोशी)


न्येन प्रख्यापनीयम्मनसि निधायावतारानुक्रमेण ॥ एते स्वांश-कलाः पुंसः कृष्णस्तु भगवान्स्वयमिति रघुनाथाद्यवताराणां भगवदंशत्वेऽशत्वमुक्त्वा कृष्णस्य परिपूर्णतदवतारत्वमुक्तम्। तदु-पबद्धात्मनाकेशवासाधारणस्तुतिभारतविष्णु पुराणादिवचनवि-रुद्धम्। मृत ब्राह्मण पुत्रानयनप्रस्तावगतभागवतेऽपि च विरुद्धम्। तत्प्रशिशंसिषितकृष्णावतारस्तुत्यर्थत्वेन कथञ्चिन्नेतव्यम्। एव मयमपि। दृश्यते भागवत एव तत्तत्प्रदेशपर्यालोचनया शिवस्य विष्णोश्च धर्म्मिग्राहकमानसिद्धः परापरभावः। तथा-हि। भागवतोपक्रमे। तस्मादेकेनमनसा भगवान् सात्वतां पतिः। "श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदे"त्यादि-कमुक्त्वा कोसौ भगवानित्याकांक्षायाम्। सत्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पूरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञां श्रेयांसि तत्र खलुसत्वतनो र्नृणांस्यु रिति श्लोकेन त्रिमूर्त्यन्तर्गतं विष्णुमेव श्रेयस्करत्ववादेन प्रागुप-क्षिप्तनियतभजनीयत्वोपपादन पूर्वकं भगवन्तं विधाय। भेजि-रे मुनयोथाग्रे भगवन्तमधोक्षजम्। सत्वं विशुद्धं क्षेमाय कल्पते नेतराविहेति। सात्विकत्वेनैव तस्य पूर्वैरप्युपासित-त्वमुक्त्वा तस्यैव विविधप्रशंसा पूर्वकम्। जगृहे पौरुषं रूपं भगवान्महदादिभिः। संभूतं षोडशकलमादौ लोकसिसृक्षया। यस्यांभसि शयानस्य योगनिद्रां वितन्वतः। नाभीह्रदांबुजादा-सीत् ब्रह्मा विश्वसृजां पतिः। यस्यावयव संस्थानैः कल्पितोलोक विस्तरः। तद्वै भगवतो रूपं विशुद्धं सत्वमूर्ज्जितम्"। इति सत्व-प्रधानं रूपमुक्त्वा ॥ एतन्नानावताराणां निदानं बीजमव्ययम्। यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादय" इति तदेवरूपं वै-ष्णवमूलमित्युक्तम्। त्रिमूर्त्यन्तर्गतोविष्णुरेवपरं विष्णुत

श्रीलक्ष्मीधर-विद्यामन्दिर, देवप्रयाग (गढ़वाल-हिमालय) व्यवस्थापक- प. चक्रधरजोशी
CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

त्वम्। स एव च भागवते वैष्णवपुराणे स्तु प्राधान्येन प्रतिपाद्यत इति स्पष्टीकृतम्। एवं च सत्वाद्येकैकगुणप्राधान्यराहित्येन निरस्त सात्विकत्वादि भेदम्मायोपाहितन्तेषां समष्टिरूपं सगुणं ब्रह्म। यस्यांशभूता इमेस्मृताः। मैत्रेयोपनिषदि। "यो हखलुवावास्य राजसोंशोसौ सयोयं ब्रह्मा। अथयोह खलुवावास्य तामसोंशोसौ सयोयं रुद्रः। अथ योह खलु वावास्य सात्विकोंशोसौसयोयं विष्णुः" इति तस्मादिदं त्रिष्णु तत्वमिति अङ्गीकृतम्भवति। अत एव यस्य प्रपञ्चनार्थं भागवतम्। अत स्तस्मिन्विष्णुपुराण प्रतिपाद्यस्य विष्णुतत्वस्य परब्रह्मावरत्वमुक्तम्। तत्रहि। ब्रह्मविष्णु शिवाब्रह्मन् प्रधानाब्रह्मशक्तयः। ततश्च देवा मैत्रेय न्यूनादक्षादय स्ततः इत्यादिना। ब्रह्मादि स्थावरान्तस्य कृत्स्नस्य प्राणिमात्रस्य उत्कर्षापकर्षापन्नपरब्रह्मशक्ति विशिषत्वमुक्त्वा तदनन्तरं "स वरस्सर्व शक्तीनां ब्रह्मण स्समनन्तरः" इति पुराणप्रतिपाद्यस्य विष्णो स्सकल ब्रह्मशक्त्युत्कृष्टत्वमभ्युपेत्यापि ब्रह्मावरत्वमुक्तम्। एवं त्रयाणां ब्रह्मशक्तित्वोक्त्या विष्णोर्ब्रह्मावरत्वोक्त्या च यत्त्रिमूर्त्युत्तीर्णं ब्रह्मास्तीति सूचितम्। तत्तु शिव एवेति विष्णुपुराणस्याप्याकूतम्। "शक्तयो ब्रह्मविष्ण्वीशा भुक्तिमुक्तिफलप्रदाः। सर्वेश्वरा सर्ववंद्या श्शाश्वतानन्तभोगिनः। अन्याश्च शक्तयो दिव्या सन्ति तत्र सहस्रशः। इज्यन्ते विविधैर्यज्ञै श्शक्रादित्यादयोमराः। सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः। प्रधाना स्संस्मृता देवा श्शक्तयः परमात्मनः। आभ्यः परस्ताद्भगवान्परमात्मा सनातनः। गीयते सर्व शक्त्यात्माशूलपाणिर्महेश्वर" इति। कूर्मपुराणेकार्थ्यादवगम्यते विष्णुभक्त्युत्कर्ष प्रसिध्यर्थं प्रवृत्ते तत्र तन्नस्फुटीकृतं अत एवामृतमथनभगीरथ चरितादि प्रस्तावेष्वनन्य साध्यमितिशि-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वेनकृतं कालकूटदमनम् गंगाधारणमित्याद्यपि तत्वत्यमुक्तम् ॥
शिवस्यत्रिमूर्त्युत्तीर्ण सात्विकादि भेदरहित मायोपहित परब्र-
ह्मरूपत्वं भागवतेपितत्रतत्रवर्णितम् ॥ यथाष्टमस्कन्धे ॥ नतेगिरि-
त्रेति प्रागुदाहृतश्लोके। एवञ्च ॥ गुणमय्यास्वशक्त्यास्य सर्गस्थि-
त्यादिकं प्रभोः। धत्से यया स्वदृग्भूमन् ब्रह्मविष्णुशिवाभिधाम्
त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम्। नानाशक्तिभिराभासि-
त्वमात्माजगदीश्वर इत्यादीनि भागवतवचनानि। यद्यपि शिव-
विभूतिभूतनीललोहितरुद्राद्युद्देशेन प्रवृत्तानि॥ तथापि प्रत्या-
सक्त्यतिशयेन शिवाभेददृष्ट्या प्रवृत्तानीत्येव योजनीयम्। एवमेव
विष्णौ दृष्टान्यप्येतादृशानियोजनीयानि। शिवस्य त्रिमूर्त्युत्ती-
र्णस्य भारते शिवपुराणादिषु चैककण्ठेन सुप्रसिद्धत्वात्। परा-
शरपुराणे सर्वेषां पुराणानां यथा योगं साक्षात्परंपरयाच शिव-
पर्यवसान प्रतिज्ञानं शैवपुराणानां साक्षाच्छिवप्रतिपादकत्वं
संहाररुद्रवर्णनद्वाराशिवपर्यवसानञ्चोक्ता॥ "वैष्णवानिपुराणानि
समस्तानि महामुने। त्रिमूर्त्तीनां हरेर्नाम्ना मूर्त्यातस्य परं पदम्।
प्रवदन्ति पुराणे द्वे ब्राह्मे चैवानयादि शैत्युक्तत्वाच्च। वैष्णवानां
त्रिमूर्त्युत्तीर्णपरब्रह्मास्तित्वाभ्युपगमे अथर्वशिर शिखाकैवल्यो
पनिषदादि श्रुति तदुपबृंहणपुराणवचनानुसारेण तत्सगुणं
ब्रह्मशिव एव पर्यवस्येदिति हि त्रिमूर्त्यन्तर्गतः सात्विको वि-
ष्णुरेवपरं ब्रह्म। त्रिमूर्त्युत्तीर्णं परं ब्रह्मनास्तीति तत्प्रतिपादक
श्रुतिपुराणान्यथानयन यत्नस्य। "एकं त्रेधाविभक्तं त्रितयस-
मधिकन्तत्वमीशास्त्रयस्ते विष्णुर्व्यामूर्त्तिरिष्टा प्रभवतिनियमः
कल्पभेदात्त्रयाणाम्। इन्द्रादीनान्दिविस्थान्निजसुकृतवशादीश्व-
राणां प्रवाहस्यादेकस्येश्वरत्वं प्रतिफलनमिवेत्यादि चैवं परास्त-
म्" इति तदीय संग्रहस्य श्लोकस्य च दर्शनाच्च। एवञ्च भार-
तविष्णुपुराणयोः धर्म्मिग्राहक मानसिद्धस्य परापरभावस्य

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

व्यत्ययेन कल्पना योगात्तद्विरुद्धं सर्वं प्रशंसार्थत्वे ननेयम्। एवं पुराणान्तरेष्वपि। किञ्च त्रिविक्रमरूपमदित्यामाविर्भूतेन येन भगवतादर्शितम्। स विष्णुर्द्वादशादित्यमध्ये सर्वेष्वपि पुराणेति ह्रासेष्ववि भागेनपरिगणितः। तेषाञ्चद्वादशानां सूर्यकलावेशेन स्वस्वमासाधिकारनिर्वोढृत्वं कूर्मपुराणे वर्णितम्। "सर्वात्मास-र्वलोकेशो महादेवः प्रजापतिः। सूर्य एवत्रिलोकस्य मूलं परम दैवतम्। द्वादशान्ये तथादित्यादेवास्ते ह्यधिकारिणः। वरुणो-माघमासेतु सूर्यः पूषातु फाल्गुने। चैत्रे मासितु वेदांगो धाता-वैशाखतापनः। ज्येष्ठे चैव च देवेन्द्रश्चाषाढेप्यवितारविः। विव-स्वान् श्रावणेमासि प्रोष्ठपद्यां भगस्स्मृतः। पर्जन्योश्वयुजेत्वष्टा-कार्त्तिकेमासि भास्करः। मार्गशीर्षे भवेन्मित्रः पौष्ये विष्णु स्सनातनः। इति। अत्रमासाधिकारिषु सूर्येषु जीवरूपप्रधान-सूर्यांशावेशेन विवक्षितः। विष्णोस्तदंशावेशेन कार्यकर्त्तृत्वो-क्तयोगात्। किन्तु तदन्तर्यामिशिवरूपसूर्यावेशः। अत एव महा-देवः प्रजापतिरित्युपक्रान्तम्। एष देवो महादेवो भास्वान् सा-क्षान्महेश्वरः। भासते वेदविदुषां नीलग्रीव स्सनातन" इत्युप-संहृतम्। प्रदेशान्तरेषु च। एषरुद्रो महादेवः कपर्दीघृणिमान् हरिः। आदित्यो भगवान्सूर्यो नीलग्रीवस्त्रिलोचनः। आधीयते सहस्रांशु स्सामगाध्वर्युहोतृभिः"। इत्यादि तत्र वर्णितम्। तत्र सूर्योपस्थानार्थमुपदिष्टेसूर्यस्य स्तोत्रे मूलश्रुत्यनुसारेण शिवरूप-तयैव सूर्यस्तुतिः कृता। भूर्भुवस्सुवरोंकार स्सर्वोरुद्र स्सनातनः। पुरुष स्सन्महोतस्त्वां प्रणमामि कपर्दिनम्। त्वमेव विश्वं बहु-धाजातं यज्जायते चयत्। नमोनिजायरुद्रायत्वामहं शरणं गतः। प्रचेतसेनमस्तुभ्यं नमोमीढुष्टमायते। नमोनमस्ते रुद्रायत्वा-महं शरणंगतः। हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः। अ-म्बिकापतये तुभ्यमुमायाः पतये नमः। नमोस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने। विलोहिताय भर्गाय सहस्राक्षाय ती

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

नमः। नमस्यामि परं ज्योति ब्रह्माणं त्वां परामृतम्। विश्वं पशुपतिं भीमंनरनारीशरीरिणम् इति। यत्तु विष्णुपुराणे। आदित्यऋषिगन्धर्वाप्सरः प्रभृतीन् सप्तविधान् मासाधिकारिणो मैत्रेयस्यन्दने भानोः सप्तमासाधिकारिण इत्युपक्रम्य तेष्वेवैतेषु मैत्रेय वसन्त्येते तु सप्तकाः। सवितुर्मण्डले ब्रह्मन् विष्णुशक्त्युपबृंहिताः। इत्युक्तम्। तत्तेषु विष्ण्वंशावेशाभिप्रायं न भवति किन्तु आदित्यो वा एष एतन्मण्डलमित्यादि श्रुतौ मण्डलपुरुषार्चो रूपतयाऽऽर्गभिः पूर्वाह्णे दिवि देव ईयत इत्यादि मन्त्रे पूर्वाह्णादितपनहेतुतया च यावेद त्रयीवर्णिताततत्कृतसाहाय्यकाभिप्रायम्। स च विष्णुस्थितस्थित्यां जगतः पालनोद्यतः। ऋग्यजुःसामभूतोऽन्तः सवितुर्द्विज तिष्ठति। मासिमासिरविर्योवातत्रतत्रहिसापरा। त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै। इति तत्रैवाग्रे तथा विवरणात्। इदन्तु य एषोन्तरादित्ये हिरण्मयः पुरुष इत्युपक्रम्य "नमोहिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतयेनमो नमइत्यन्तया तैत्तिरीयोपनिषदा "असौयस्ताम्रो अरुण" इत्यादि श्रुति गणैस्तदनुसारिभिरुपबृंहणैश्च सिद्धम्। शिवस्यसूर्यान्तर्यामितयामासाधिकारिषु आवेशं ननिरोद्धुमीष्टे। अतो यदावेशाद्यस्यस्वयं कार्यकरण सामर्थ्यमवगतं तस्य तदपेक्षयोत्कर्षो न संगच्छते अतस्तद्विरुद्धं सर्वन्तत्प्रशंसार्थतया यथाकथञ्चिन्नेयमिति सिद्धम्॥ १७॥

अथ शिवस्य बाणासुराहवेपराजयं लक्षतः प्रतिबोधयति॥

उज्जृम्भणे यदुकुलाधिपते रुदास्था
बालेन्दुशेखर पुराकिलबाणयुद्धे।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

एतावतींविकलतांतवविक्रमस्य
लोकेखलाः कतिचिदीश्वरकल्पयन्ति ॥३८॥

कृष्णस्योज्जृम्भणेशिवस्यौदासीन्यमात्रं नतु पराजयइत्येतत्कुतोऽवगम्यते इत्याकांक्षायामर्थापत्तेरित्याह ॥ ३८ ॥

ओजीयसामपिवरास्थिरकार्मुकोसि
भीमोसि सर्वजगतामखिलेश्वरोसि ।
इत्थन्त्वयिश्रुतिशतैरुपगीयमाने
किन्नाम जल्पतिजनश्शिवकिम्पचानः॥३९॥

कल्पान्तरद्रुहिणकोटिकरोटिमाला
भस्माङ्गरागकमठाङ्गवराहशृङ्गैः ।
आकल्प एव तवमङ्गलविग्रहस्य
सर्वोत्तरं तवबलं किमु न व्यनक्ति ॥ ४० ॥

यस्यांशकैश्शरभभैरववीरभद्रैः
आमर्दिताहरिविरिञ्चपुरन्दराद्याः ।
विश्वेशतस्यतवविक्रमभूरिभावे
साक्ष्यन्तएवसमुपाददतेकिमन्यैः ॥ ४१ ॥

कल्पद्रुमाहरणषट्पुरशासनादि
यद्दत्तयैवयदुराडतनिष्टशक्तया ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तस्मिन्नुच्छिन्नप्रतिहतिं तव पौरुषस्य
मूर्खोदितां बत स एव कथं सहेत ॥ ४२ ॥

न वा ओजियो रुद्रत्वदस्तीति सर्वस्मादप्योजीयस्त्वं शिवस्य श्रुतम्। नम उग्राय च भीमाय चेत्यादौ निरुपपदभीमनाम्ना सकलजगद्भयंकरत्वं श्रुतम्। तत्सर्वतो बलवत्वमन्तरेण न सम्भवति तथा सर्वैश्वर्यसम्पन्नस्सर्वेश्वर इत्यादौ श्रुतम्। सर्वनियन्तृत्वमपि तदन्तरेण न सम्भवति किं चातीतानन्तकल्पेषु पितामहानुपसंहृत्य तदीयकपालमालाधारणं तद्भस्मानुलेपनं कूर्मावतारमुपसंहृत्य तदस्थिधारणं वराहावतारमुपसंहृत्य तदीयशृङ्गधारणञ्च ततस्ततो बलवत्वमन्तरेण न सम्भवति। अपि च शिवकलाविर्भाववत्तया शिवांश भूतैश्शरभभैरववीरभद्रैर्नृसिंहावतारोपसंहारः पितामहपञ्चमशिरश्छेदो दक्षाध्वरे पुरन्दरादिसकलदेवावलेपध्वंसश्चकृतः। सर्वमेतल्लौकिकन्यायेन शिवस्य सर्वतो बलवत्वमतितरां स्पष्टीकरोत्येव। अपि च शिवमाराध्य तत्प्रसादत एव कृष्णेन पारिजाताहरणसामर्थ्यं लब्धमिति षट्पुरवधे निकुम्भयुद्धे प्रच्छन्नतया युध्यमानं निकुम्भं द्रष्टुं प्रतियोद्धुमशक्नुवता कृष्णेन स्वप्रतिष्ठितस्य बिल्वोदकेश्वरनाम्नः शिवस्य ध्यानादेव मायाविनं निकुम्भं दृष्ट्वा प्रतियुद्धं कृतमित्यादि हरिवंशेन प्रपञ्चितम्। अतः शिवस्य पराजय इत्यत्यन्तापहास्यमेव अत्र लेखनीयान्युपाख्यानानि विस्तरभयान्नलिखितानि शिवपुराणादिषु प्रसिद्धानि द्रष्टव्यानि ॥३९॥४०॥४१॥४२॥

आस्तां नियमर्थापत्तिकथा युद्धार्थमागत्य तदौदासीन्यावलम्बने को हेतुरित्याकांक्षायां तत्र हेतूनाह।

शक्तस्त्वया शतमखस्य रिपुस्स युद्धम्

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अभ्यर्थयन्न सुरभावविलोपनाय ।
मत्तुल्य एव समरे मदमस्यदोष्णाम्
कण्डूभरोत्थमचिरादपनेष्यतीति ॥ ४३ ॥
देव्याच देववचनं परिपालयन्त्या
सम्पादितासमरसम्पदुषानिदाना ।
यन्नत्वयाहरिमुखेनभुजावलेपात्
प्रच्याव्यसैषनिहितः प्रथमाधिपत्ये ॥४४॥
शैलीच ते समुदिताशशिखण्डचूड
भक्तेर्विभावयसियद्भवतोधिकत्वम् ।
आदायचक्रमभिदिव्यनदीतनूजम्
यामेव सोप्यनुससारयदुप्रवीरः ॥ ४५ ॥
दत्तं च शौर्यमधिकं भवतैवतस्मै
तच्चेन्महेशकलया पिनपालयेथाः ।
आशंक्यवाक्यमखिलं भवतोमृषेति
वेदागमेष्वपि जनाविमुखाभवेयुः ॥ ४६ ॥
एतैस्त्वयागिरिशहेतुभिरेव तस्मिन्
आविष्कृतं किमपि तत्सहजं न तेजः ।
कामांधकत्रिपुरवासिजलंधराद्यैः
यस्मिन्दरप्रकटितेशलभत्वमाप्तम् ॥४७॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

हरिवंशे तावद्दोःसहस्रकण्डूभरेण युद्धमतितरामभ्यर्थयमानोऽत्यन्तदृप्तो बाणश्शिवेन वरदानव्याजेन तद्दर्पशान्त्यर्थं शप्त इति सूचितम्। ततः प्रहस्य भगवानब्रवीद्वृषभध्वजः। भविता बाणयुद्धन्ते यदा तच्छृणु दानव। ध्वजस्यास्य यदा भङ्गस्तवतात भविष्यति। स्वस्थाने स्थापितस्याथ तदा युद्धं भविष्यति। अत्र प्रहस्येत्यनेन युद्धप्रार्थनस्यापहसितत्वोक्त्या स्वगृहस्थापितमयूरध्वज पतनरूपदुर्निमित्तोद्गमनानन्तरं युद्धं भविष्यतीत्युक्त्या च भाविनि युद्धे तस्यावश्यं पराजयो भविष्यतीति सूचितम्। भागवते तु अयमर्थः स्पष्टमेवोक्तः। बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः। सहस्रबाहुर्वाद्येन ताण्डवे तोषयन्मृडम्। भगवान्सर्वभूतेशश्शरण्यो भक्तवत्सलः। वरेणच्छन्दयामास स वरं वव्रे पुराधिपः। स एकदाह गिरिशं पार्श्वस्थं प्रेच्यदुर्मदः" किरीटेनार्कवर्णेन संस्पृशंस्तत्पदाम्बुजम्। नमस्ये त्वाम्महादेव लोकानां गुरुमीश्वरम्। पुंसामपूर्णकामानां कामपूरामरांघ्रिपम्। दोस्सहस्रंत्वयादत्तम्परं भाराय मे भवत्। त्रैलोक्ये प्रतियोद्धारं न लभे त्वदृते समम्। कण्डूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम्। अभ्ययां चूर्णयन्नद्रीन् भीतास्तेपि प्रदुद्रुवुः। तच्छ्रुत्वा भगवान्क्रुद्धः केतुस्ते भज्यते यदा। त्वद्दर्पघ्नं भवेन्मूढ संयुगं सदृशेन ते। इति विष्णुपुराणेपि। बाणोपि प्रणिपत्याग्रे मैत्रेयाह त्रिलोचनम्। देव बाहुसहस्रेण निर्विण्णोस्म्याहवं विना। कच्चिन्ममैषां बाहूनां साफल्यजनको रणः। भविष्यति विना युद्धं भाराय मम किं भुजैः। इति पृष्टवन्तं बाणं प्रति शिववचनम्। मयूरध्वजभङ्गस्ते यदा बाण भविष्यति। पिशिताशजनानन्दम्प्राप्स्यसि त्वं तदा रणम्। ततः प्रणम्य मुदितश्शम्भुमभ्याययौ गृहान्। स भग्नं ध्वजमालोक्य हृष्टो हर्षतरं ययौ। नन्वेवं सति क्रौर्यं किम

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्यनुचिते विषयेनदृष्टमिति पूर्वोक्तविरोधः । किं खल्वतोधिकं क्रौर्यंयद्बाणों नामशप्यते । तस्याजन्मसिद्धशिवभक्तिपरिपूर्णतपः प्रसादितेन शिवेन पुत्रत्वे न परिगृह्य स्कन्दानुजोयमितिदेव्यै समर्पितस्कन्देनाप्यनुजत्वेनोपलालित इति हरिवंशेनोक्तम् । ततश्च यदिनामयुद्ध प्रार्थनानुचितातदामैवं वरंद्दणुयाइति बुध्युपदेश एवयुक्तः । नतुपुरतः प्रणम्य युद्ध प्रार्थना समयेशापीदातुमुचितः । ततो विष्णुना स्वभक्तस्य स्वप्रार्थितन्ददतो बलेच्छद्मना बन्धनं यत्कृतं ततोस्य न कोपि विशेषः । तद्वदेवबलेश्च तत्कर्मानुसारिणा देवेनेत्थं कृतमित्येवायमपि परिहारोजात इत्याशङ्क्य ततो विशेष प्रदर्शनार्थं शापप्रयोजनमाह । असुरभावविलोपनायेति । अयमाशयः । येभ्यश्शिवेनगाणापत्यमात्रं वादत्तं नतेषांस्वस्व शौर्यादिनाविस्मयशीलत्वं सन्निधाववलेपनं वेति मर्यादा । अत एव सौषुप्तिके पर्वणिघोररूपान्नानाविधाकारानति भीषणान्नानाविधायुधधरान् शिवपार्षदान् प्रस्तुत्योक्तम् । कामकारकरास्सिद्धास्त्रैलोक्यस्येश्वरेश्वराः । नित्यानन्दाःप्रमुदितावागीशागतमत्सराः । प्राप्याष्टगुणमैश्वर्यंये च यान्तिनविस्मयम् । येषांविस्मयतेनित्यं कर्मभिर्भिगवान्भवः । मनोवाक्कायनिरतान्पातिपुत्रानिवौरसान् । श्रुतेन ब्रह्मचर्येण तपसा चदमेन च । ये समाराध्यशूलाकं तत्सायुज्यंसमागताः । यैरात्मभूतैर्भगवान् पार्वत्या सहशङ्करः । सर्वभूतगणैर्युक्तो भूतभव्योभवत्प्रभुः । इति एवञ्च साचात्पुत्रस्सन्नप्यनुचिते प्रवृत्तो बुध्युपदेशं गृह्णातीतियदिनिश्चयस्तदा तदुचितनिग्रहेणापि सततो निवर्त्तनीय इति नीतिः । अयंचबाणः केवलं बुध्युपदेशेननततो निवर्तनार्ह इति । शिवेन बाणवचनैरेवात्रगतम् । हरिवंशेहि । असकृन्निर्जितादेवा स्सिद्धास्सहमरुद्गणाः । मयाबलमदोत्सेकात्ससैन्येन तवाश्रयात् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तेपराजितसत्त्वस्ता निराशामत्यराजयी। नाकप्रष्ठमुपागम्य नि-
वसन्ति यथा सुखम्। सोहन्निराशोयुद्धस्य जीवितन्नाद्यकामये।
अयुध्यतो वृथाह्येषाबाहूनां धारणम्मम। तद्ब्रूहिममयुद्धस्य
कच्चिदागमनं भवेत्। नमेयुद्धं विनादेव रतिरस्तिप्रसीदमे।
इति। एवंच शिवाद्दराभासं शापंलब्ध्वात्मपुरंप्राप्तः। प्रियमावेद-
यिष्यामिमनसोभवतोनुगमिति कुम्भाण्डंप्रत्युक्त्वा किं विष्णुना
वद्धस्य पितुर्बलेर्मोक्षोपायं पुनस्त्रैलोक्यराज्य प्राप्त्युपायञ्च शिव-
प्रसादाल्लब्धवानासीदित्यादितेन पृष्टश्चिराद्युद्धापेक्षोहं भावि-
महद्युद्धंलब्धवानस्मीत्युक्त्वा तेनकुम्भाण्डेनमंत्रिणाकीदृशो वरः
प्रार्थित इति स निर्वेदमुक्तस्तदानीमेव स्वगृहस्थापितमयूरध्वज
पतनानन्तरमेव प्रवृत्तं रुधिरवर्षादिमहोत्पातञ्च दृष्ट्वापि भा-
वियुद्धनिश्चयेन हृष्ट एवस्थित इति प्रपञ्चेनापि बुध्युपदेशोयोग्य
इति व्यक्तीकृतम्। बाणश्च पुत्रत्वेन परिगृहीतो बाहुसहस्रबला-
दसुरभावान्निवर्त्य शिवपार्षदमर्यादायां स्थापनीयः। अतस्त-
दर्थं वरदानव्याजेन शापोदत्तइत्येव मौदासीन्ये शापस्तावदेको
हेतुः। तदनुसारिभावियुद्धावश्यं भावनिदानं देवीवचनमपि
तत्र हेत्वंतरम्। एवं हि हरिवंश एवहि बाणशापानन्तरमु-
पाख्यायते। कदाचिदुमयासार्धं भगवानिन्दुभूषणः। व्याज-
हार नदीतीरे दिव्यकन्यादि संवृतः। तत्रोषाबाणदुहिता
सेवमानामहेश्वरीम्। ममाप्येवं भवेद्भर्ता किमित्येवं व्यचिन्त-
यत्। भावन्तस्याः परिज्ञाय भवानीकरुणानिधिः। उचेतवापि
कल्याणिहृद्यो भर्ताभविष्यति। वैशाख शुक्लद्वादश्यांयस्स्वप्ने र-
मतेत्वया। स एव पश्चाद्भर्तातेभविष्यतिचिरादिति। सातथैव
तिथौ तस्यांस्वप्नेदृष्ट्वा वसुन्धरम्। क्रीडन्तमात्मनोत्थायबभूववि-
रहातुरा। चित्रलेखा सखीतस्यास्तयास्वप्नं निवेदितं। यूनस्त्व-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

लोक्यां प्रथितान् लिखित्वा समदर्शयत्। अनिरुद्धे विलिखिते द्रष्ट्वा बाणस्य कन्यका। अयमेव मयाद्रष्टोनिशायामित्यु वाचताम्। तदेवद्वारकां गत्वासाप्सरास्तत्रनारदात्। संप्राप्यतामसींविद्यान्तस्यप्रासादमाविशत्। तत्रानिरुद्धं क्रीडन्तमुत्तमस्त्रीशतैनतम्। स्त्रियस्सर्वाअपितयैवाच्छादयतविद्यया। तस्यामेवतिथौ स्वप्नेद्रष्टवन्तमुषारतिम्। तस्यामासक्तहृदयं तद्वृत्तान्तन्यवेदयत्। ततस्तस्यानुमत्यासातं गृहीत्वाक्षणेन सा। आनीय नगरं वीरं न्यवीविशदुषान्तिकम्। उषातिमुदिता गुप्ताकन्यान्तः पुरवासिना। तेनैव रममाणासाचिह्नैर्ज्ञाताचरचिभिः। ततः क्रुद्धेन बाणेन प्रेषितान्हत्य सैनिकान्। तदायुधान्येवादाय प्रद्युम्नतनयोवधीत्। ततोबाणस्स्वयं कृत्वा युद्धमायान्ततश्चितः। बबंधनागपाशैस्तं वध्यंतत्रन्यवेशयत्। नारदादिममाकर्ण्यवृत्तान्तंसहसाहरिः। बलप्रद्युम्नसहितोयोद्धुं बाणपुरंययाविति। एव मुषामूलेअत्र युद्धे देवीवचनसाफल्यार्थं नागपाशबन्धनानन्तरमनिरुद्धेन स्तुतायास्तत्र कृतसन्निधानायाः कराग्रस्फोटनेन वेदनापरिहाराय दृढनागपाशबन्धं शिथिलीकृत्य दुर्गारूपायास्तस्या एव देव्याः सद्यः कृष्णः समागत्य बाणस्य भुजच्छेदनेन गर्वपरिहार्यं नागपाशान् दूरंपलायितान् कृत्वा त्वामपि द्वारकांनेष्यतीत्यनुग्रहवचन साफल्यार्थंच तस्मिन्युद्धे शिवेनौदासिन्यमवलम्बितमित्यपरोहेतुः। अपि च शिवस्य स्वस्मादपि स्वभक्तोत्कर्षख्यापनस्वभावः कुबेरादिषु दृष्टः। कृष्णेनापि भारतयुद्धमनायुध एव पाण्डवजयान्तं निर्वर्तयिष्यामीति निजप्रतिज्ञामपहाय त्वामायुधं ग्राहयिष्यामीतिस्वभक्तस्य भीष्मस्य प्रतिज्ञां पालितवताकृष्णेनाप्यनुसृतः। तत्रतृतीयो हेतुः। अपि च मैनाके पूर्वरूपेण शिवन्तपसाप्रसादितवतीकृष्णायेतर दु-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

लंभानेकवर प्रदानानन्तरम्। अपि चेत्समरं प्राप्य भविष्यसिम-माधिकः। इत्युक्तं वरानन्तरं द्रोणपर्वणि प्रतिपादितम् हरिवंशे पारिजाताहरणसामर्थ्यालाभार्थं शिवं प्रसादितवन्तं कृष्णंप्रति। पुरामैनाक माश्रित्य तपस्त्वमकरोर्यदा। तदा मम वचः कृष्ण संस्मृत्यस्थैर्यमाप्नुहि। अवध्यस्त्वमजय्यश्च मत्तश्शूरतरस्तथा। भवितासीत्यवोचं यत्तत्तथैव न चान्यथा। इत्यादि शिववचनेन दृढीकृतंचान्योहेतुः। एवमेतैर्हेतुभिश्शिवेन तदानीमौदासीन्य-मवलंब्य स्वकीयतेजो लेशोपि नाविष्कृतः। यस्मिन्नीषदाविष्कृ-ते कामान्धकादय श्शलभतामाप्ता इति। अत्र शप्तस्त्वयेति श्लो-केऽभ्यर्थयन्निति परस्मैपदप्रयोगस्यार्थं यतेरात्मनेपदित्वे पि वल-तेरात्मनेपदमनित्यं ज्ञापकादिति वामनसूत्रतस्साधुत्वम्। दे-व्याचेति श्लोकेसैष इत्यस्य सोचिलोपे चेत्पादपूरणमिति सूत्रत स्साधुत्वम्॥ ४७॥

अथ श्मशानवासदोषस्य परिहारमाह।

दग्धेतवाक्षिदहनेनचराचरेस्मिन्
मत्वाखिलं भुवनमेवमहाश्मशानम्।
तत्रास्थितिं विबुधनाथतवासहायाम्
सन्तश्मशानवसतिं समुदाहरन्ति॥४८॥

अत्रभागवतवचनम्। कामांधकत्रिपुरकालजयाद्यनेकभूत द्रुहः क्षपयितुस्तुतयेन तत्ते। नन्वन्त्यकालइदमात्मकृतस्वनेत्रव-ह्निस्फुलिङ्ग शिखया निहितन्त्वयेति॥ ४८॥

नन्वेवम्महाश्मशानवासस्य परिहारोस्तु कथं क्षुद्रेष्वपि श्माशानेषु सन्ध्यानृत्तप्रसिद्धेः परिहार इत्याकांक्षायामाह।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सन्ध्यासु भूतगणभैरवभद्रकाली
संरम्भजन्मजगदापदपासनाय ।
तद्गोचरेषु पितृकाननभूमिषु त्वम्
तत्तादृशं गिरिशताण्डवमातनोषि ॥४९॥

लिङ्गपुराणे सन्ध्यानृत्तस्य हेतुरुक्तः । पुराकिलापुरुषवध्य-दारुकासुरवधार्थं शिवेन प्रेरिताजगन्मातृत्वेन सर्वत्रदयालुतया दारुकस्य त्रैलोक्यकण्टकत्वेपि तद्वधचिकीर्षामलभमाना केन चिदंशलेशेन शिवकण्ठं प्रविश्य कालकूट सहस्रांशमात्रं गृही-त्वा निर्गता क्रूराभद्रकाली दारुकासुरन्निहत्यभूतगणै स्सहश्म-शानेषु स्थित्वा लोकान् संहर्त्तुमुपचक्रमे । तदाशिवः केन चि-दंशेन वटुकभैरवो भूत्वा तत्समीपे प्रादुर्भूयाति क्षुधितस्तन्या-र्थीरुदन्नशयिष्ट । तस्मै भद्रकालीदययास्तन्यन्ददौ । स्तन्येन सहतत्पीतकालकूटं निर्गमय्य प्राश्यामीत्यभिसन्धायतदर्धपान-मात्र एव सोप्यति क्रूरोभूत्वा तयासह जगत्संहर्त्तुमारेभे । शिवस्तयोस्तदुद्भूतगणानाञ्च प्रचारवत्सुश्मशानेषु तत्सन्निधावा-नन्दनृत्तप्रदर्शनेन तेभ्यो जगत्संरक्षणीयमिति मत्वा सन्ध्यासु नृत्तं करोतीति । आनुशासनिकेतु । श्मशानवासस्तवकिमर्थमि-त्युमया पृष्टेन शिवेन सकलप्रजाहिंसकानां भूतानां श्मशान-वासिनां वधस्तत्रगत्वा मयाक्रतः मद्वस्थानान्मेध्यमेव तन्मोक्ष कांक्षिणा मित्युक्तम् । पुराब्रह्मासृजद्घोरान् भूतसङ्घान् बलो-द्धतान् । तेभूतसंघाघ्नन्ति स्वसृष्टास्तेनाखिलाः प्रजाः । उग्राणा-न्निग्रहे तेषांसोशक्तोमान्ययोजयत् । घोराहतामयातत्र रक्षि-तास्त्वाखिलाः प्रजाः । श्मशानादपि मेस्थानान्नान्यन्मेध्यतमंभुवि ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

मुनिभिर्मेध्यमित्युक्तं स्थानं यत्र वसाम्यहम्। आचरद्भिर्वृतं रौद्रं मोक्षकामैस्तु सेव्यते। मध्याह्ने सन्ध्ययोस्तत्र नक्षत्रे रुद्रदैवते। आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः। सर्वलोक हितार्थाय श्मशाने निवसाम्यहम्। एवं श्मशानस्य शिवस्थानत्वादति पवित्रत्वादेव प्रह्लादेन नृसिंह प्रीत्यर्थं तीर्थयात्रां कुर्वताश्मशानं गत्वा तत्र सन्निहितो महाकाल शिवोर्चित इत्युक्तम्। वामनपुराणे। तं दृष्ट्वा समहाकालं कालकालान्तकारिणम्। यमसंयमनंमृत्योर्मृत्युं चित्र चरित्रकम्। श्मशाननिलयं शम्भुं भूतनाथं जगत्पतिम्। अर्चयित्वा शूलधरं जगाम निषधान् प्रतीति। भागवतेतु। निरतिशयस्वात्मानन्दास्वादनित्य तृप्तस्य तु च्छीकृतसकलविषयभोगस्य सर्वेष्वपि स्नानानुलेपनादिषु तुल्यदृष्टे शिवस्य कैलासादिष्विवश्मशानेपि वासस्तत्तौल्यप्रदर्शनायेति निरुक्तः। तत्र हि। एतस्यांसाध्वि सन्ध्यायां भगवान् भूतभावनः। परितोभूत पार्षद्भिर्वृतोन्टत्यति भूतराट्। श्मशानचक्रानिलधूलि धूसरो विकीर्णविद्योतिजटाकलापः। भस्मावकुण्ठामलरुक्मदेहोदेवस्त्रिभिः पश्यति देवरस्ते। इतिदितिं प्रत्युक्तवताकाश्यपेन परमेश्वरस्य सतश्शिवस्य श्मशानवासतद्भस्मानुलेपनादि किमर्थमित्याकांक्षायामुक्तम्। नयस्य लोकेस्वजनः परोथवानात्यादृतो नोतकश्चिद्विगर्ह्यः। वयं व्रतैस्तच्चरणापविद्धामाशास्महे तास्वत भुक्तभोगाम्। यस्यानवद्यंचरितं मनीषिणोगृणन्त्यविद्यापटलं बिभित्सवः। निरस्तसाम्यातिशयोपि यस्स्वयं पिशाच चर्यामचरद्गतिस्सताम्। हसन्ति यस्याचरितं हि दुर्भगास्स्वात्म न्रतस्याविदुषस्समीहितम्। यैर्वस्त्रमाल्याभरणानुलेपनैश्श्वभोजनं स्वात्मतयोपलालितम्। यत्कारणं विश्वमिदञ्च मायाब्रह्मादयो

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

यत्कृतसेतुपालाः। आज्ञाकरीतस्य पिशाचचर्या अहोविभूम्नश्च-रितं विडम्बनमिति॥ ४९॥

एवं विधं शिवचरितरहस्यं देवैरपि ज्ञातुमशक्यं तत्स्वरूपकथने तवकोधिकार इत्याशंक्यतद्रहस्य तत्वोद्घाटनार्थमिदं न भवति। किन्त्वन्यार्थमित्याह॥

श्रीकण्ठतावकचरित्ररहस्यरीतिः
एतादृशीक इहवेत्तिनरस्सुरोवा।
त्वन्नामरूपगुणचिन्तनपुण्यमेव
व्याजेनकेनचिदवाप्तुमिहश्रमोमे॥ ५०॥

अत्रैतादृशीरीतिरित्यनेन शंकास्पददोषान्तरपरिहारोपि सूचितः। शिवपार्षदाः खल्वति क्रूरागर्हितवृत्तयश्च भूतप्रेतपिशाचासुरराक्षसतिर्यग्जात्यादि रूपाश्चतिभीषण विकृताननाद्याकारास्सदामांस भक्षणाद्यति गर्हितवृत्तयश्च बहवः प्रायेण तत्र तत्र वर्ण्यन्ते। हरिवंशे कैलासयात्रायां तपश्चरते श्रीकृष्णाय वरन्दातुं शिवस्य प्रस्थाने तत्पार्षदास्तथैव वर्णिताश्शिवस्य परममंगलास्पदत्वे कथमिदमुपपद्यत इति तस्य दोषत्वशंकास्पदस्यैवं परिहारः। कूर्मपुराणे। भगवन् भूतभव्येश महादेवाम्बिकापते। त्वामेव पुत्रमिच्छामि त्वयावासदृशंसुतमिति। प्रार्थितवन्तं ब्रह्माणं प्रति। यदर्थितं भगवता तत्करिष्यामिपुत्रक। विज्ञानमैश्वरं दिव्यमुत्पत्स्यतितवानघमिति तथैव वरं प्रदाय परमशिवस्तस्य मुखान्नीललोहितरुद्रमूर्त्तिमास्थाय प्रादुर्भूतः प्रजास्सृजेति नियुक्तः। स्वात्मनासदृशान्रुद्रान्निर्मलान्नीललोहितान्। जरामरणनिर्मुक्तान् ससर्ज परमेश्वरः। ततस्तेन। मासाची-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

रौद्रश्रीरिव प्रजास्त्वं विवर्जिताः । अन्यास्सृजस्व भूतेश जन्ममृत्यु-समन्विताः । इति प्रार्थितः । नास्तिमेताहृशस्सर्गस्सृजत्वं विविधाः प्रजाः । इति तमेव सृष्टौ नियुज्य ततः प्रभृति निवृत्तसृष्टि व्यापारो निश्चलस्थितः । तेन स्थाणुनामाबभूवेत्यु पाख्यायते । तत्रशैवलैङ्गादित्य पुराणादिष्वप्येव मेवोपाख्यायते । तत्र शिवेन ये स्वसदृशरुद्रास्सृष्टास्ते स्वोपासना विशेषैस्स्वसा-युज्यं लब्धवन्तः परमानन्दरूपं रुद्रस्थानं प्राप्ता एव स्वयं ब्रह्मांडमध्ये ब्रह्ममुखादाविर्भूतां स्थाणुविशालाच्च संज्ञितानी-ललोहिता मूर्त्तिमास्थाय क्रीडतापरमशिवेन लीलार्थं स्वा-नुचरत्वेन सृष्टाः । अन्येषां शिवसादृश्यासम्भवात् ते चदे-गन्धर्व विद्याधरमनुष्यासुरराक्षसभूत प्रेतपिशाचतिर्यगादि-नानाजातिषु सृष्टाः । कूर्मपुराणे सृष्टिनिवृत्यनन्तरम् । ततस्स-भगवान् ब्रह्मावीक्ष्यदेवन्त्रिलोचनम् । सहैव मानसैरुद्रैर्वृतो वारिजलोचनः । ज्ञात्वा परतरं भावमैश्वरं ज्ञानचक्षुषा । तुष्टा-वजगतामेकं कृत्वाशिरसिचांजलिम् । इति ब्रह्मणा शिवस्य तत्सृष्टसकलमानसरुद्रसहितस्य स्तोत्रं कृतमित्युपक्रम्य तत्कृत-स्तोत्रे प्रक्षीणशोकैर्विविधैर्भूतैः परिवृता यत इति तत्सृष्टरुद्राणां शिवसायुज्यप्राप्त्या वीतसकल शोकानां विविधभूतत्वस्योक्तेः । अत एव चानन्तरं तदनुचरत्वं प्राप्ताः । तदनन्तरम् । यत्वयाभ्य र्थितं ब्रह्मन्पुत्रत्वे भवतोनघ । कृतन्मया तत्सकलंसृजत्वं विविधं जगदित्याद्युपदिष्टवतस्तस्यांतर्धाने । सहैवमानसैः पुत्रैःक्षणाद-न्तरधीयतेति तत्साहित्योक्तेः । महाभारते शान्तिपर्वणि । रुद्रा-णामपिचेशानं गोप्तारं विदधेप्रभुः । महात्मानम्महादेवं विशा लाक्षं सनातनमिति । शिवेन तेषां रुद्राणां नीललोहितानुच-रत्वं कल्पितमित्युक्तत्वाच्च । तदिदम् । शिवसायुज्यं गतानामेव

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

नीललोहितानुचरपारिषद्गणत्वं तेषां नानारूपजातितया घोरशान्तविविधाकारत्वञ्च स्पष्टमेव प्रतिपादितम्। सौषुप्तिके पर्वणि। द्विपशैलप्रतीकाशाः प्रादुरासन्महारवाः। खवराहोष्ट्र रूपाश्च हयगोमायुगोमुखाः। ऋक्षमार्जारवदना व्याघ्रद्वीपिमुखास्तथा। काकवक्त्राप्लवमुखा शुकवक्त्रास्तथैव च। महागजाश्च वक्त्राश्च हंसवक्त्रा स्सितप्रभाः। दार्वाघाटमुखाश्चापि पिशाचवदनास्तथा। कूर्मनक्रमुखाश्चैव शिंशुमारमुखास्तथा। महामकर वक्त्राश्चश्येनवक्त्रास्तथैव च। तथैवा शिरसोराजन् मृगवक्त्रा विभीषणाः प्रतप्तजिह्वानेत्रान्तज्वालावर्णास्तथैव च। चतुर्दंष्ट्राश्चतुर्जिह्वाश्शंकुकर्णाः कृशोदराः। किरीटिनो मौलिधरास्तथाकुञ्चितमूर्धजाः। उष्णीषिणोमकुटिनश्चारुवक्त्रा स्वलंकृताः। पद्मोत्पलापीडधरास्तथा मुकुरधारिणः। शतघ्नीचक्रहस्ताश्च तथान्ये मुसलायुधाः। मुसुण्ठीपाश हस्ताश्च गदाहस्ताश्चभारत। पृष्ठेषु बद्धेषु चयाश्चित्रचापारणोत्कटाः। सध्वजास्सपताकाश्च सखड्गास्सपरश्वधाः। महापाशोद्यतकरास्तथा लाङ्गलपाणयः। शूलहस्ताः खड्गहस्तास्सर्पोच्छ्रित किरीटिनः। महासर्पाङ्गदधराश्चित्राभरणधारिणः। रजोध्वजाः पङ्कदिग्धास्सर्वे चित्राम्बरस्रजः। नीलांगाः कमलाङ्गाश्च पणवानकगोमुखान्। अवादयन् पारिषदास्संहृताः कनकप्रभाः। गायमानास्तथैवान्ये प्रहृष्टाः पुरुषर्षभाः। लङ्घयन्त प्लवन्तश्च वल्गन्तश्च महाबलाः। धावन्तोजवनाबद्धाः पवनोद्धूत मूर्धजाः। मत्ताइव महानागाविनदन्तोमुहुर्मुहुः। सुभीमाघोर रूपाश्च शूलपट्टिशपाणयः। विरागवसनाश्चित्रा श्चित्रमाल्यानुलेपनाः। रत्नचित्राङ्गदधरास्समुद्यतकरास्तथा। हन्तारो द्विषतांशूराः प्रसह्यासह्यविक्रमाः। पातारोसृग्वसानांच मांसान्त्र कृत भोजनाः। चूडाकलाः कर्णकाराः प्रकृशामन्दरोदराः। अतिह्रस्वा

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तिदीर्घाश्च प्रलम्बाश्चातिभैरवाः । कामकारपराश्चिन्नाश्च त्रैलोक्यस्येश्वरेश्वराः । नित्यानन्दाः प्रमुदितावागीशागतमत्सराः । प्राप्याष्टगुणमैश्वर्यं येचयान्तिनविस्मयम् । येषां विस्मयतेनित्यं कर्म्मभिर्भगवान्भवः । मनोवाक्काय निरतन्पाति पुत्रानिवौरसान् । पिबन्त्यमृंजिये चान्ये क्रुद्धा ब्रह्मद्विषस्तथा । श्रुतेन ब्रह्मचर्येण तपसा नियमेन च । येसमाराध्य शूलाङ्कं तत्सायुज्यं समागता इति । त एव विविधाकाराः क्रूरशान्तारुद्रानीललोहितनियोगाज्जगत्संरक्षणार्थं तत्र तत्र स्थिताः । रुद्राध्यायेनमइषुमद्भ्यो धन्वाविभ्यश्चेत्यारभ्य श्वपतिभ्य श्ववोनम इत्यन्तैश्चतुर्थ्यन्तपदैः प्रतिपादिताः । त एव तत्र सहस्राणि सहस्रश इत्यनुवाके देवव्रतेषु प्रथमसाम्निच नानास्थान स्थितसकलदेव नियामकतया च प्रतिपादिताः । त एवायुषसूक्ते दिव्यागणाबहुरूपाः पुराणा इति । चिराच्छिवसायुज्यं प्राप्यदिव्यस्थाने स्थिताः पुराणाः । सन्ततमेव लीलार्थावताराभिप्रायेण बहुरूपाः एवं शिवेन स्वलीलार्थं कृतायाः पुरारुद्रसृष्टेस्ति र्यग्योन्याकारपर्यन्तायाः पृथिव्यां धर्मसंस्थापनार्थमवतितोर्षता नारायणेनानुषङ्गिकं साधकान्देवान्प्रत्युक्तमिति सभापर्वणि प्रतिपादितम् । तत्रदेवान्प्रतिभगवद्वचनम् । जायध्वं मानुषेलोके सर्वभूतमहेश्वरः । जङ्गमानि विशालाक्षो भूतान्येवात्मनोसृजत् । जायतामिति गोविन्दस्तिर्यग्योनिगतैरपि । तानिसर्वाणि सर्वज्ञसुराणिसुरेश्वरा इति । अत्र जायध्वंमानुषे लोके इति नियोगानन्तरं कथन्देवैर्गर्हितम्मनुष्यजन्मप्राप्तव्यमिति तेषामनुशयपरिहारार्थमेव भगवानुवाच सर्वभूतमहेश्वरस्सर्वज्ञो नीललोहितरुद्रस्सुराणिसर्वाणि जङ्गमान्येवात्मनादेवमनुष्य तिर्यग्विशेषमन्तरेण स्वात्मतुल्यपराक्रमत्वादि नैकरूपेणासृजत् । किमर्थं गोविन्दोधर्मसंस्थाप-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

नार्थं भूम्यामवतरन् विष्णुस्तिर्यग्योनिगतैरपि सहायैस्सहजाय-तामित्येतदर्थं सर्वेषामविशेषेण सृष्टौहितिर्यग्योनिजन्मन्यपि न विचिकित्साभवति अतो मानुषजन्मनि भवद्भिर्विचिकित्सा न कार्येति तदनन्तरं देवैस्तथैवकृतमित्यप्यनन्तरश्लोकेनदर्शि-तम् । त एव मुक्ताः क्षणेन सर्व एव दिवौकसः । दैत्यदानवह-न्तारस्सम्भूता भुवनेश्वरा इति । अतो विविधाकारेषु शिवपा-र्षदेषु ये पिशाचादि रूपास्तेषां तज्जात्युचिताहारस्तत्र तत्र प्रतिपादितः । अत्यन्तविष्णुभक्तस्य घण्टाकर्णाख्यस्यापि हि पिशाचस्य मांसरुधिराहारः कैलासयात्रायामेव भूयसा प्रप-ञ्चितः । शवमांसादि भक्षणं पिशाचादि शास्त्रप्राप्तमित्यपि घण्टाकर्णेन कृष्णं प्रत्युक्तमिति तत्रैव प्रतिपादितम् । ब्राह्म-णस्य हतस्याथ शवमादायसत्वरः । द्विधाकृत्य यथाघोरं पि-शितं केशशाद्वलम् । ततः खण्डं समादायत्वग्भिरभ्युच्चयन्ततः । निधान पात्रे तु शुभेनमस्कृत्य जनार्दनम् । इदं प्रोवाच देवेशं प्राञ्जलिः प्रणतस्थितः । ग्रहाणेदं जगन्नाथभक्ष्यं योग्यन्तवप्रभो । भवादृशैर्जगन्नाथग्राह्यं सर्वात्मनाहरे । भक्तिं नम्रार्चनं विष्णो नात्रकार्या विचारणा । दत्तं यद्भक्ति नम्रेण ग्राह्यन्तत्स्वामि-नाहरे । नवंसुसंस्कृतं भक्ष्यं ब्राह्मणं शवमुत्तमम् । सर्वेषामेव वर्णानां शवं ब्राह्मणमुत्तमम् । अस्माकं पिशिताशानां शास्त्रै-र्निश्चितमेवहीति । अतः केषाञ्चिच्छिव पार्षदानां पिशाचादि रूपाणामवस्थानाशनादि समयेषु स्वजात्युचितरुधिरमांसा-हारः स्वामिनो न दोषमावहतीति सर्वमनवद्यम् । एतेन । लुप्त-क्रियायाशुचयेमानिने भिन्नसेतवे । अनिच्छन्नप्यदां बालाः शूद्राएवाति शङ्करमित्यादिकमुक्त वतस्तमोगुणोद्रिक्तस्य दक्षस्य सद्यो दण्डपतनं भागवतादिषु वर्णितमुपश्रुत्यापि ये कुदृष्टय-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

[illegible]तास्तथैवप्रलपन्ति । श्मशानवासनिरतोनित्यमशुचिः पि-
शाचादिभिस्सहवसन् रुद्रस्सात्विकैर्न्न सेव्यत इति ते निरस्ता-
वेदितव्याः । किञ्च देवा अपि कृतात्मसंशोधना शुद्धा एव शि-
वस्य दर्शनं लभन्ते नान्यथेत्यादि वचनैर्बहुधावगतम् । तथाहि
हरिवंशेतावत् । त्रिपुरवधाकांक्षिभिर्देवै ब्रह्मणा प्रेरितैः शिवा-
लय प्राप्त्यर्थं शिवदर्शनलाभार्थं च तपश्चीर्णमित्युक्तम् । प्रति-
गृह्य तुतद्वाक्यम्मनोभिर्वाग्भिरेव च । भूमिं प्रपेदिरे सर्वे सह
रुद्रैश्च भारत । विन्ध्यपादे च मेरौ च मध्ये च पृथिवीतले ।
तपसोग्रेण योगज्ञास्सर्वे ते मुनयो नृप । काश्यपेयाहरं प्राप्तुं
जपन्तो ब्रह्मसंहिताम् । परिधाय च चर्म्माणि मृदूनि च शुभानि
च । स्वयं ज्ञानामलक्ष्णानामुग्राणां कुरुसत्तम । गृहीतानि वि-
मुक्तानि देवैभ्यो वनचारिभिः । अन्तरिक्षमथोत्पत्य विविशु-
र्मायया वृतम् ! हरालयं सुरास्सर्वे व्याघ्रचर्मनिवासिन इति ।
वामनपुराणेप्युक्तम् । ततो मुरारिं सर्वेपि समभ्येत्यसुरास्तदा ।
ऊचुर्देवानमस्कृत्य जगत्क्षुब्धञ्चराचरम् । तच्छ्रुत्वा भगवान्प्राह
गच्छामोहरमन्दिरम् । सवेत्त्यतिमहाज्ञानी जगत्संक्षुब्धिका-
रणम् । तथोक्तावासुदेवेन देवाश्शक्रपुरोगमाः । जनार्दनं पुर-
स्कृत्य जग्मुस्ते हरमन्दिरम् । न तत्र देवं वृषभं ददृशुर्नापि
नंदिनम् । शून्यं गिरिं तुपश्यन्तिह्यज्ञानतिमिरावृताः । ता-
न्मूढ दृष्टीन् संप्रेक्ष्यदेवान् विष्णुर्महाद्युतिः । प्रोवाच किन्न-
पश्यध्वम्महेशं पुरतस्थितम् । तमूचुर्न्नैवदेवेशं पश्यामोगिरि-
जापतिम् । नकारणन्तत्वविज्ञोयेन दृष्टिर्हतास्तिनः । तानु-
वाच जगन्मूर्त्तिर्यूयं देवास्तु सागसः । पापिष्ठागर्भहन्तारो-
मूढाश्चात्मार्थतत्पराः । तेनज्ञातं विवेकोवोहृतो देवेन शूलिना ।
येनाग्रतस्थं तमपि पश्यन्तोपि नपश्यथ तस्मात्काय विशुध्यर्थं

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

हजाय-
देवदृष्ट्यर्थमादरात्। तम्र कृच्छ्रेहिंसंयुक्ताः कुरुध्वं स्थानम...
राः। इति तदनन्तरं पञ्चतप्तकृच्छ्राचरणपूर्वकम्। शिवस्य महास्नानादि पूजां कृत्वैव देवैश्शिवदर्शनं लब्धमित्यग्रे प्रपञ्चितम्। स्कान्दे केदारखण्डेतु। मेरुपृष्ठे रावणवधोपायम्मन्त्रयन्तो देवामहतातपसाशिवं प्रसाद्य लब्धवरोरावणस्तदधिकन्तपो बलंविना भवद्भिर्जेतुं नशक्यत इति विष्णुना बोधितास्तथा तपः कर्त्तुमक्षमाः शिवमेव प्रसाद्यरावणं जेष्याम इति मनीषया शिवलोकङ्गताः शिवराजधानीद्वारस्थितनन्दिकेश्वरेण तपोभिः कायशोधनमकृत्वाभवद्भिर्द्रष्टुं शक्यश्शिव इति बोधिताः। प्राक्तस्मिन् कृतापराधत्वेन स्वेन शप्तं रावणं जिघांसतातेन वैकुण्ठं नीत्वा विष्णुः प्रदर्शितः। विष्णुनास्वयन्तपः कर्त्तुमक्षमेण देवानांमभिमतकार्यं रावणस्य तपोवीर्यभ्रंशं अत्यन्तानुचित सीतानुरागमोहानुवृत्ति संपादनेन कारयित्वा निर्वहणीयमिति तदुपायोपदेशेन देवास्समाश्वासिताः। तदर्थञ्च विष्णुस्सीतारूपया ब्रह्मविद्यया सह स्वयमवतीर्ण इति प्रपञ्चितम्। तत्रदेवानां शिवदर्शनार्थं तपश्चरणाभावाच्छिवदर्शनन्नासीदिति स्पष्टमेवोक्तम्। एवमन्वय व्यतिरेकाभ्यां पुराणेषु शुद्धैरेव द्रष्टुं शक्यश्शिव इति प्रतिपादितम्। भागवतेपि। दक्षस्य मलिनान्तःकरणस्य यज्ञार्थं शिवानाह्वानोपायेनैव तद्दर्शनाभावमुपपाद्य वीरभद्रकृततदध्वरविध्वंसनानन्तरं दक्षसंरक्षणार्थं देवैस्सह कैलासं गत्वा बहुधा प्रसादितवन्तंब्रह्माणं कटाक्षितवतश्शिवस्य प्रसादेनैव प्रभावशिवावलोकन मासीदिति प्रतिपादितम्। सलूयमानेशीर्षेतु दक्षोरुद्राभिवीक्षितः।सद्यस्सुप्त इवोत्तस्थौ ददृशेचाग्रतोमृडम्। तदावृषध्वजद्वेषकलितात्माप्रजापतिः शिवावलोकादभवच्छरच्चन्द्रनिभामलः। शिवस्तवायकृतधीर्ना-

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

...कलयासंपरेतांसुतांस्मरन् ।
...तपसा शिवं प्रसादितवतोनारा-
...शिवस्य बहुतपः क्षीणपापैरेव द्रष्टुं
...। वाचाकैः कैस्सुष्टुतं साधुवाग्भिर्जल-
...म्‌द्रा... । वाचाकैः कैस्सुष्टुतं साधुवाग्भिर्जल-
न्दिव्यधरणीचन्द्रसूर्यौ । हुताशवायूयजमानं सुरेशन्नालन्द्रष्टुं भि-
न्नवृत्तानराये । येचानृतानास्तिकाः पापशीला ब्रह्मद्विषोवाप्य-
मृतस्य योनिम् । यंपश्यन्ति ब्राह्मणास्साधुवृत्ताः क्षीणपापे मन-
सावीतशोकाः । तन्निष्ठात्मानस्तपसादेवमीड्यन्तं भक्त्यावै विश्व-
रूपन्ददर्शेति अलमति प्रपञ्चेन । अत्र श्रीकण्ठेति सम्बोधनेन
भूकैलासवासिनः पार्वती परिणेतुरेतद्ब्रह्माण्डाधिपते श्रीकण्ठ-
मूर्त्तेरेवमादीनिचरितानि । नतु साक्षात्परमशिवस्येति सू-
चितम् ॥ ५० ॥

एवं शिवस्य परब्रह्मभावं साधकप्रमाणैर्बाधकनिरासैश्च प्र-
साध्य स्वस्य तस्मिन् भक्तिदार्ढ्यमाशास्ते ॥

**शश्वच्चेतोममपशुपते शाल्मलीपुष्पतुल्यान्**
**अन्यान्देवानतिलघुफलप्रापकान्वर्जयित्वा ।**
**पादाम्भोजेतवपरिमिलद्दिव्यभृंगावलीढे**
**चन्द्रापीडश्श्रयतुसततं चञ्चरीकस्यलीलाम् ॥**

दिव्यभृङ्गा ऋच एवमधुकृतः ऋग्वेद एव पुष्पं यजूंष्येव
मधुकृतो यजुर्वेद एव पुष्पं सामान्येव मधुकृतः सामवेद एव
पुष्पमथर्वाङ्गिरस एव मधुकृतः इतिहास पुराणं पुष्पमिति
छन्दोगोपनिषदक्तैर्भृङ्ग...रवलीढे तेषां प्रतिपाद्यतया सेव-
नीय इत्यर्थः ॥ ५१ ...विन्दयोः पुष्प...

अत्रैवं कृतं स्तो...

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

रूपतया समर्पयति । ...क्षे हिसंशुद्धाः कुरुध्वं स्थानम्... ...ह्रजाय-
...कक्षाचरणपूर्वकम् । शिवस्य

...र्शनं लब्धमित्यग्रे प्रपञ्चि...

ब्रह्मोपेन्द्रप्रमुखविनुत...
भक्तिग्राह्यस्त्वमिति भगन्नि...
पादद्वन्द्वेतवकरुणया निर्गुणोपित्वदीये
पूजापुष्पप्रकरपदवीमेष पुष्णातुनित्यम् ॥

भावग्राह्यत्वम् । भावग्राह्यमनीडाख्यं भावाभावक...वम् इति श्वेताश्वतरमन्त्रेण । कृतकृत्यस्य ...स्यमम किं क्रियतेऽमरैः । बहिर्वाभ्यन्तरेवापि मयाभावोनिगृह्यत इति शिववचनेश्च प्रसिद्धम् ॥ ५२ ॥

इति श्रीभारद्वाज कुलतिलक श्रीमदप्पयदीक्षित कृतमिदं ब्रह्मतर्कस्तोत्रं सविवरणं सम्पूर्णम् ॥



...भव...

...ध्वजह्रे...

...चन्द्रनिभामलः । शिव...

शिवावल...

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri